Thanjavur Sarasvati Mahal - Series No. 373



श्रीः

# ॥ श्रीदक्षिणामूर्तिसंहिता ॥

# SRI DAKSHINAMURTI SAMHITA

Edited By :

Thethiyur. S. KRISHNAMURTHI SASTRI
Senior Sanskrit Pandit,
Sarasvati Mahal Library, Thanjavur.



THANJAVUR MAHARAJA SERFOJI'S
SARASVATI MAHAL LIBRARY, THANJAVUR.

# ॥ विषयानुक्रमणिका ॥

॥ श्रीमन्महागणपतये नमः ॥

॥ श्रीमहात्रिपुरसुन्दर्यै नमः ॥

॥ श्रीशङ्कराय नमः ॥

॥ श्रीगुरुपादा(दुका)भ्यां नमः ॥

# ॥ श्रीदक्षिणामूर्तिसंहिता ॥



## ॥ प्रथमः पटलः ॥

श्रीमच्छ्रीकेशहृदयं पञ्चसिंह्यासनात्मकम् ।
फलं कल्पलतानां च चारुरत्नस्फुरद्गलम् ॥ १

चतुरायतनानन्दि चतुरन्वयकोशगम् ।
नित्यानन्दपरब्रह्मधाम नौमि सुखाप्तये ॥ २

श्रीदेव्युवाच —

कृपां कुरु महादेव कथयानन्दसुन्दर ।
किं तद्ब्रह्ममयं धाम श्रोतुमिच्छामि तत्वत: ॥ ३

कथं श्रीसहितं देव श्रीकोशहृदयं कथम् ।
पञ्चसिंह्यासनै: सेव्यं कथं कल्पलतात्मकम् ॥ ४

कथं रत्नात्मकं देव कथमायतनात्मकम् ।
कथमाम्नायसंसेव्यं कथं नित्यात्मकं विभो ॥ ५

---

M. S. No. 7052. D. 17128 and No. 7053 of Sarasvati Mahal Library, Thanjavur.

ईश्वर उवाच —

एतत्सर्वात्मकं वस्तु त्रिपुरा परमेश्वरी ।
चेल्लक्ष्मीसेव्यमाना सा देवी कामदुघा वरा (परा) ॥ ६

श्रीविद्या च तथा लक्ष्मीर्महालक्ष्मीस्तथैव च ।
त्रिशक्तिः सर्वसाम्राज्यलक्ष्मीः पञ्च प्रकीर्तिताः ॥ ७

वारुणान्तं[1] वह्निसंस्थं दीर्घनेत्रसमन्वितम् ।
बिन्दुनादात्मकं बीजं लक्ष्मीमन्त्र उदाहृतः ॥ ८

ऋषिर्भृगुर्निचृच्छन्दस्तथा श्रीर्देवता प्रिये ।
शतुर्यें[2] बीजशक्ती च कीलकं रेफ उच्यते ॥ ९

द्वितीयेन[3] चतुर्थेन षष्ठेनार्केण सुन्दरि ।
इन्द्रेण चन्द्रकलया ह्यङ्गुलीर्लोकसुन्दरि ॥ १०

षडङ्गानि न्यसेन्मन्त्रान् हृच्छिरश्च शिखा ततः ।
कवचं नेत्रमस्त्रं च नमः स्वाहा क्रमेण च ॥ ११

---

1. वारुणात् वकारात् अन्तं अन्ते-अनन्तरं विद्यमानं अक्षरं शकारः वह्निना सह रेफेण सह संस्थं, दीर्घनेत्रेण ईकारेण समन्वितं च बीजं बिन्दुनादात्मकं शकाररेफईकारबिन्दुनादसहितं श्रीमिति बीजं सिद्धं भवति ॥

2. शं बीजं ईं शक्तिः रेफः कीलकम् ॥

3. श्रां श्रीं श्रूं श्रैं श्रौं श्रः इति वर्णैः कराङ्गुलिन्यासाः हृदयादिन्यासाश्च कार्याः ॥ श्रां अङ्गुष्ठाभ्यां नमः, श्रीं तर्जनीभ्यां नमः, श्रूं मध्यमाभ्यां नमः, श्रैं अनामिकाभ्यां नमः, श्रौं कनिष्ठिकाभ्यां नमः, श्रः करतलकरपृष्ठाभ्यां नमः इति कराङ्गुलिन्यासः, श्रां हृदयाय नमः, श्रीं शिरसे स्वाहा, श्रूं शिखायै वषट्, श्रैं कवचाय हुं श्रौं नेत्रत्रयाय वौषट् श्रः अस्त्राय फट् इति हृदयादिन्यासाश्च कर्तव्याः इति फलितोऽर्थः ॥

वषट् (हुं) वौषडस्त्रं च फडेभि:सह विन्यसेत् ।
अष्टपत्रं लिखेद्यन्त्रं बहिर्भू बिम्बमालिखेत् ॥ १२

मध्ये पुष्पं विनिक्षिप्य पीठशक्तीः समर्चयेत् ।
विभूतिरुन्नतिः कान्तिः सृष्टिः कीर्तिश्च सन्नतिः ॥ १३

व्युष्टिरुत्कृष्टिः ऋद्धिश्च वसुदिक्षु प्रपूजयेत् ।
मध्ये सिह्मासनं पूज्यं सर्वशक्तिमयं प्रिये ॥ १४

ध्यायेत्ततः श्रियं रम्यां सर्वदेवनमस्कृताम् ।
तप्तकार्तस्वराभासां दिव्यरत्नविभूषिताम् ॥ १५

आसिच्यमानाममृतैर्मुक्तारत्नद्रवैरपि ।
शुभ्राभ्रालोकयुग्मेन मुहुर्मुहुरपि प्रिये ॥ १६

रत्नौघबद्धमकुटां शुद्धक्षौमाङ्गरागिणीम् ।
पद्माक्षीं पद्मनाभेन हृदि चिन्त्यां स्मरेद्बुधः ॥ १७

एवं ध्यात्वा भजेद्देवि पद्मयुग्मधरां सदा ।
वरदाभयशोभा[हस्ता]ढ्यां चतुर्बाहुं त्रिलोचनाम् ॥ १८

आवाहना[न्या]दिमुद्राश्च क्रमेणैव प्रदर्शयेत् ।
उच्चा(ऊर्ध्वा)ञ्जलिमधः कुर्यात् अ(इ)यमावाहनी भवेत् ॥

इयं तु विपरीता स्यात्तदा वै स्थापनी भवेत् ।
ऊर्ध्वाङ्गुष्ठं मुष्टियुतं तदेयं सन्निधापनी ॥ २०

अन्तरङ्गुष्ठमुष्टिभ्यां तदेयं सन्निरोधिनी ।
तर्जनीभ्यां परिभ्राम्य सकलीकरणं भवेत् ॥ २१

अञ्जलिं चार्घ्य[र्घवत्]वत्कृत्वा परमीकरणं भवेत् ।
परिवृत्य करौ मन्त्री तर्जन्यौ च कनिष्ठिके ॥ २२

मध्यमानामयुगले स्थापयेत्तु परस्परम् ।
अमृतीकरणं देवि मुद्रेयं धेनुरूपिणी ॥ २३

एताः संमानमुद्रास्तु दर्शयित्वा जपेत्प्रिये ।
गन्धपुष्पादिभिः सम्यक् स्वेष्टकामार्थसिद्धये ॥ २४

अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ।
बलाका विमला चैव कमला वनमालिका ॥ २५

विभीषिका मालिका च शाङ्करी वसुमालिका ।
पुर आदिक्रमेणैव प्रादक्षिण्येन पूजयेत् ॥ २६

इन्द्राग्नियमनैर्ऋत्यवरुणानिलसंज्ञकान् ।
कुबेरेशानलोकेशान् भूमिबिम्बे क्रमाद्यजेत् ॥ २७

ब्रह्मा विष्णुश्च लोकेशा दिग्वक्त्रक्रमतो यजेत् ।
अर्कलक्षं जपेन्मन्त्रं तद्दशांशेन होमयेत् ॥ २८

पद्मैस्त्रिमधुमिश्रैश्च पुरश्चारी ततो भवेत् ।
एवं सद्भक्त[संसिद्ध]मन्त्रस्तु सर्वसाम्राज्यदो भवेत् ॥ २९

**अष्टपत्रमिति** — अष्टदलपद्मं विलिख्य तद्बहिः भूपुरद्वयं विलिखेत् । मध्ये पुष्पाञ्जलिं दत्वा आधारशक्त्यादिपीठपूजान्ते विभूत्यादिनवपीठशक्तिपूजनं कुर्यात् । तद्यथा – विभूत्यै नमः । उन्नत्यै ० । कान्त्यै ० । सृष्टयै ० । कीर्त्यै ० । सन्नत्यै ० । व्युष्टयै ० । उत्कृष्टयै ० । ऋद्ध्यै ० इति प्रागादिदिक्षु मध्ये च

पूजयित्वा कर्णिकामध्ये सर्वशक्तिमयरत्नसिंहासनाय नमः इति पूजयेत् । ततः तत्र उक्तरीत्या देवीं ध्यात्वा प्राणप्रतिष्ठापूर्वं आवाह्य आवाहन्यादिमुद्राः प्रदर्शयेत् । आवाहन्यादिमुद्रालक्षणं स्पष्टम् । देवीं षोडशोपचारैः मूलोच्चारणपूर्वकं सम्पूज्य पूज्यपूजकयोर्मध्या प्राचीति व्यवस्थामाश्रित्य अग्नीशासुरवायव्येषु मध्ये दिक्षु च क्रमेण श्रां हृदयशक्त्यै नमः, हृदयशक्तिं पूजयामि, श्रीं शिरःशक्त्यै नमः, शिरःशक्तिं पूजयामि इति षडङ्गमन्त्रैः पूजयेत् । अथ देव्याः पुरस्तादारभ्य प्रादक्षिण्येन दलेषु अष्टसु च बलाकाद्या आवरणदेवताः पूजयेत् । तद्यथा – ओं श्रीं बं बलाकायै नमः बलाका श्री. पा. पू. इत्यादि । ततः इन्द्रादिदिक्पालकान् यथास्थितसूर्योदयव्यवस्थया दिशः प्रकल्प्य इन्द्रादिविष्णुपर्यन्तान् पूजयेत् । एवं संपूज्य पुरश्चर्याविहितक्रमेण द्वादशलक्षं जपेत् मन्त्रसिद्ध्यै ।। ततः तद्दशांशेन त्रिमधुरसिक्तपद्मैः (पद्मदलैश्च) हुत्वा तद्दशांशेन तर्पणं तद्दशांशेन मार्जनं तद्दशांशेन विप्रभोजनं च कुर्यात् । एवं कृते मन्त्रःसिद्धो भवति ।।

इति श्रीदक्षिणामूर्तिसंहितायां एकाक्षरलक्ष्मीपूजाविधिर्नाम

प्रथमः पटलः ।।

## ॥ द्वितीयः पटलः ॥

**ईश्वर उवाच —**

अथ वक्ष्ये महादेवि लक्ष्मीहृदयमुत्तमम् ।
यस्य स्मरणमात्रेण पलायन्ते महापदः ॥ १

प्रणवं पूर्वमुच्चार्य ह्रीमात्मकमुच्चरेत् ।
श्रीपुटं चापि कमले कमलाथ प्रसीद च ॥ २

लये मध्यगतां भूमिं रुद्रस्थाने तु योजयेत् ।
प्रसीद पूर्वबीजानि सम्पुटत्वेन योजयेत् ॥ ३

महालक्ष्म्यै हृदन्तोणुर(साव) ष्टाविंशतिवर्णवान् ।
दक्षः प्रजापतिः पश्चात् ऋषिश्छन्दस्तथैव च ॥ ४

गायत्रं देवता लक्ष्मीर्हृदयं परिकीर्तितम् ।
द्वितीयं* च तृतीयं च बीजशक्ती क्रमेण च ॥ ६

---

* श्रीं बीजं ह्रीं शक्तिः । ओं कीलकम् । ओं श्रीं ह्रीं श्रीं कमले श्रीं ह्रीं श्रीं हृदयाय नमः । ओं श्रीं ह्रीं श्रीं कमलालये श्रीं ह्रीं श्रीं शिरसे स्वाहा । ओं श्रीं ह्रीं श्रीं प्रसीद श्रीं ह्रीं श्रीं शिखायै वषट् । ओं श्रीं ह्रीं श्रीं प्रसीद श्रीं ह्रीं श्रीं कवचाय हुं । ओं श्रीं ह्रीं श्रीं महालक्ष्म्यै श्रीं ह्रीं श्रीं नेत्रत्रयाय वौषट् । ओं श्रीं ह्रीं श्रीं नमः श्रीं ह्रीं श्रीं अस्त्राय फट् इति न्यासः ॥

एतद्दक्षिणामूर्तिसंहितायामुद्धृतो लक्ष्मीमन्त्रः एवं भवति – ओं श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद ओं श्रीं ह्रीं श्रीं महालक्ष्म्यै नमः इति । अत एव अष्टाविंशत्यक्षरात्मकता सिद्ध्यति ॥ –

प्रणवं कीलकं देवि ततोऽङ्गानि प्रविन्न्यसेत् ।
कमले हृदयं प्रोक्तं शिरः स्यात्कमलालये ॥ ६

शिखा प्रसीद तेनैव कवचं चतुरक्षरम् ।
नेत्रत्रयं ततोऽस्त्रं च त्रिबीजपुटितं पृथक् ॥ ७

अङ्गानि पूर्ववद्देवि न्यसेन्मन्त्रं समाहितः ।
रत्नोद्यद्वसुपत्रं च पद्मयुग्मं च हेमकम् ॥ ८

अग्ररत्नावलीराजदादर्शं दधतीं पराम् ।
चतुर्भुजां स्फुरद्रत्ननूपुरां मकुटोज्ज्वलाम् ॥ ९

ग्रैवेयाङ्गदहाराढ्यां कङ्कणां [1]रत्नकुण्डलाम् ।
पद्मासनसमासीनां दूतीभिर्मण्डितां सदा ॥ १०

शुक्लाङ्गरागवसनां महादिव्याङ्गनाग्नताम् ।
एवं ध्यात्वार्च्चयेद्देवीं पूर्वयन्त्रे च पूर्ववत् ॥ ११

आदावङ्गानि सम्पूज्य पूर्ववत्परमेश्वरीम् ।
भारतीं पार्वतीं चान्द्रीं शचीं दिक्षु प्रपूजयेत् ॥ १२

श्रीधरश्च हृषीकेशो वैकुण्ठो विश्वरूपधृक् ।
विदिक्षु पूजयेदेतान् सर्वसिध्यर्थहेतवे ॥ १३

अनुरागो विसंवादो विजयो वल्लभो मदः ।
हर्षो बिलश्च तेजस्वी पुर आरभ्य पूजयेत् ॥ १४

इन्द्रादयश्च सम्पूज्याः पुनर्देवीं यजेत्सुधीः । [2]
लक्षत्रयं जपेन्मन्त्रं नियमेन तु साधकः ॥ १५

तद्दशांशेन पद्मैस्तु हुनेत्सम्पत्तिमिच्छता ।
महीवाजि[गज] तुरङ्गाश्च जायन्ते तस्य मन्दिरे ॥ १६

---

1. रत्नकुण्डलमण्डिताम् ॥ 2. समष्टिपूजा कार्या ॥

सुवर्णरत्नभूषादिमण्डितः साधको भवेत् ॥ १७

**प्रणवं पूर्वमुच्चार्येति** — ओं श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद ओं श्रीं ह्रीं श्रीं महालक्ष्म्यै नमः इत्यष्टाविंशति-वर्णात्मको मन्त्रः ॥ दक्षप्रजापतिः ऋषिः, गायत्रीछन्दः, लक्ष्मीः देवता । श्रीं बीजं, ह्रीं शक्तिः, ओं कीलकम्, इष्टार्थे विनियोगः । ओं श्रीं ह्रीं श्रीं कमले श्रीं ह्रीं श्रीं अङ्गुष्ठाभ्यां नमः । ओं श्रीं ह्रीं श्रीं कमलालये श्रीं ह्रीं श्रीं तर्जनीभ्यां नमः (स्वाहा) इत्यादि प्रसीद, प्रसीद, महालक्ष्म्यै, नमः इति मन्त्रावयवा-नपि उक्तबीजत्रयसम्पुटितान् कृत्वा करन्यासान् हृदयादि-न्यासांश्च कुर्यात् । ततो देवीं उक्तप्रकारेण ध्यात्वा यन्त्रे मूर्ति प्रकल्प्य प्राणप्रतिष्ठापूर्वकं आवाह्य षोडशोपचारपूजां आवरणदेवता-पूजां च कुर्यात् । पूजा सर्वत्र मूलमन्त्रेण वा ओं श्रीं ह्रीं श्रीं इति बीजाक्षरोच्चारणपूर्वकं वा विहिता ।

अत्रापि प्रथमपटलोक्तपीठे एव पूजा विधीयते ॥ आधार-शक्त्यादिपूजनं विभूत्यादिपीठशक्तिपूजनं च पूर्ववदेव । अतः कर्णिकामध्ये देवीं ध्यात्वा प्राणप्रतिष्ठापूर्वं देवीं सम्पूज्य – आवरण पूजां कुर्यात् । आदौ ओं श्रीं ह्रीं श्रीं कमले श्रीं ह्रीं श्रीं हृदयाय नमः हृदयशक्ति श्री पा. पूजयामि नमः इत्यादि – अस्त्रशक्त्यन्तं अङ्गशक्तिपूजनं, "पूज्यपूजकयोर्मध्यं प्राचीति" प्रकल्प्य देव्याः पुरतः आरभ्य पूर्वदलमारभ्य अष्टसु दलेषु बलाकाद्या अष्टशक्तीः पूजयेत् ॥ ततो दिक्पालपूजनं कृत्वा मूलमन्त्रं त्रिलक्षं प्रजपेत् । तद्दशांशेन त्रिमधुरसिक्तपद्मदलैः केवलपद्मैर्वा होमः । एवं कृते साधकस्य गजवाजिमुख्यसम्पत्तिः जायते ॥

**इति श्रीदक्षिणामूर्तिसंहितायां महालक्ष्मीपूजाविधिर्नाम**

**द्वितीयः पटलः ॥**

## ॥ तृतीयः पटलः ॥



ईश्वर उवाच —

त्रिशक्तियजनं वक्ष्ये सर्वसिद्धिप्रदं नृणाम् ।
श्रीबीजं मायाबीजं च कामबीजं समालिखेत् ॥ १

इयं त्रिशक्तिर्देवेशि त्रिषु लोकेषु दुर्लभा ।
ऋषिर्ब्रह्मास्य गायत्रं छन्दोऽपि कथितं प्रिये ॥ २

[1]त्रिशक्तिर्देवताऽङ्गानि द्विरावृत्या यजेत्प्रिये ।
अथ यन्त्रं प्रवक्ष्यामि साधकानां हिताय च ॥ ३

षट्कोणं पूर्वमालिख्य मध्ये विद्यां लिखेद्बुधः ।
[2]वीप्सया तां तु षट्कोणकोणेषु क्रमतो यजेत् (लिखेत्) ॥ ४

बाह्ये वसुदलं कुर्याद्दीर्घस्वरविभूषितम् ।
चतुरश्रं चतुर्द्वारभूषितं मण्डलं लिखेत् ॥ ५

मध्ये देवीं समावाह्य ध्यायेत्सर्वसमृद्धिदाम् ।
नवहेमस्फुरद्भूमौ रत्नकुट्टिममण्डपे ॥ ६

महाकल्पवनान्तर्गे रत्नसिंहासने वरे ।
कमलासनशोभाढ्यां रत्नमञ्जीरमण्डिताम् ॥ ७

स्फुरद्रत्नलसन्मौलिं रत्नकुण्डलमण्डिताम् ।
अनन्तरत्नघटितनासाभूषणभूषिताम् ॥ ८

---

1. त्रिपुटा इति तन्त्रान्तरेषु निर्दिश्यते ॥ 2. द्विरावृत्या

बाणाङ्कुशाब्जयुगलां [1]पाशचापानि बिभ्रतीम् ।
षड्भुजामिन्दुवदनां दूतीभिः परिवारिताम् ॥ ९

चारुचामरहस्ताभी रत्नादर्शसुपाणिभिः ।
ताम्बूलस्वर्णपात्राभिर्भूषापेटीसुपाणिभिः ॥ १०

तप्तकार्तस्वराभासां पूर्वोक्ते मण्डले यजेत् ।
उपचारैः समाराध्य ततोऽङ्गावरणं यजेत् ॥ ११

पूर्ववत्परमेशानि परिवारानथो यजेत् ।
लक्ष्मीं हरिं च गिरिजां शिवं [2]रत्यङ्गजौ क्रमात् ॥ १२

अग्रकोणादि सम्पूज्य ततः षट्कोणपार्श्वयोः ।
शङ्खपद्मनिधी पूज्यौ वसुपत्रेषु मातरः ॥ १३

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही चैव माहेन्द्री चामुण्डा सप्तमी भवेत् ॥ १४

महालक्ष्मीर्महादेवि पुरआदि प्रपूजयेत् ।
इन्द्रादयश्च सम्पूज्याः कामिनीरूपधारिणः ॥ १५

उत्तुङ्गा यौवनोन्मत्ता देव्याराधनतत्पराः ॥
लक्षत्रयं जपेन्मन्त्रं नियमेन जितेन्द्रियः ॥ १६

तद्दशांशेन देवेशि किंशुकैर्होमयेत्सुधीः ।
अनेन विधिना मन्त्री पुरश्चारी भवेत्प्रिये ॥ १७

---

1. पाशं चापं च 2. रतिमनङ्गकम् ॥

## अथ सर्वसिद्धिप्रद त्रिशक्ति(लक्ष्मी)पूजाविधिः उच्यते –

श्रीं ह्रीं क्लीं इति त्रिशक्तिमनुः । अस्य मनोः ब्रह्मा ऋषिः, गायत्री छन्दः, त्रिशक्तिः महालक्ष्मीः देवता । श्रीं बीजं ह्रीं शक्तिः क्लीं कीलकम् । इष्टार्थे विनियोगः । द्विरावृत्तमूलमन्त्रवर्णैः कराङ्गन्यासाः ॥

षट्कोण–अष्टदल–भूपुरद्वन्द्वात्मके पीठे पूजा । कर्णिकामध्ये मूलमन्त्रवर्णान् यन्त्राङ्गानि च विलिख्य तत्र देवीं ध्यात्वा षोडशोपचारपूजां कृत्वा आवरणदेवतापूजनं कुर्यात् । प्रथमं षडङ्गदेवताः अग्नीशासुरवायव्येषु मध्ये दिक्षु च सम्पूज्य देव्या अग्रकोणमारभ्य लक्ष्मीं हरिं गिरिजां हरं रतिं मन्मथं च सम्पूज्य षट्कोणपार्श्वयोः देव्या दक्षभागे शङ्खनिधिं वामभागे पद्मनिधिं च सम्पूजयेत् । ततो दलाष्टके ब्राह्म्यादिमहालक्ष्म्यन्ताः अष्टमातरः पूजनीयाः । तद्बहिः भूपुरे सूर्योदयदिशमारभ्य प्राच्यादिदिक्षु देव्याराधनतत्पराः इन्द्रादिविष्णवन्तदेवताः पूजयेत् । लक्षत्रयं पुरश्चर्यार्थं जपेत् । तद्दशांशेन त्रिमधुरसिक्तैः केवलैर्वा किंशुकपुष्पैः होमः । विहिततर्पणादिकं कृत्वा सिद्धमन्त्रो भवति ॥

**इति श्रीदक्षिणामूर्तिसंहितायां त्रिशक्ति(त्रिपुट)महालक्ष्मीपूजाविधिर्नाम तृतीयः पटलः ॥**

## ॥ चतुर्थः पटलः ॥

ईश्वर उवाच —

अथ वक्ष्ये महादेवि सर्वसाम्राज्यदेवताम् ।
यस्या आराधनाद्विष्णुरभूल्लक्ष्मीपतिःस्वयम् ॥ १

चन्द्रेशमादनक्ष्मेशवह्निदीर्घाक्षिमण्डितम् ।
बिन्दुकूरेश्वरीयुक्तं विद्येयं वैष्णवी प्रिये ॥ २

श्रीबीजसम्पुटं कुर्यात्सर्वसाम्राज्यदायिनी ।
ऋषिर्हरिस्तथा छन्दो गायत्रं चास्य सन्मनोः ॥
देवता मोहिनी लक्ष्मीर्महासाम्राज्यदायिनी ॥ ३

बीजं कूटं समाख्यातं शक्तिः श्रीबीजमुच्यते ।
षड्भिराद्यैः स्वरैर्भित्वा षडङ्गानि प्रविन्न्यसेत् ॥ ४

अतसीपुष्पसङ्काशां रत्नभूषणभूषिताम् ।
शङ्खचक्र-गदापद्मशार्ङ्गबाणधरां करैः ॥ ५

षड्भिः कराभ्यां देवेशि वरदाभयशोभिनीम् ।
एवमष्टभुजां ध्यात्वा रविलक्षं जपेद्बुधः ॥ ६

तद्दशांशेन पद्मैस्तु हुनेत्साम्राज्यसिद्धये ।
जितेन्द्रियः सविधिवद् यन्त्रोद्गारं शृणु प्रिये ॥ ७

त्रिकोणं चाष्टपत्रं च भूबिम्बं च ततो लिखेत् ।
चतुर्द्वारं सुशोभाढ्यं यन्त्रमेतत्समालिखेत् ॥ ८

अस्मिन् समावाह्य देवीं पूजयेदुपचारकैः ।
पूर्ववत्परमेशानि षडङ्गावरणं यजेत् ॥ ९

गायत्री चैव सावित्री सरस्वत्यथ भागतः ।
क्रमेण पूजयेन्मन्त्री ब्राह्मयाद्याः स्व(स)स्वरैः पृथक् ॥ १०

अष्टपत्त्रेषु भूबिम्बेष्वेकोच्चारेण पूजयेत् ।
अष्टादशमहाकोटियोगिनीभ्यो नमो लिखेत् ॥ ११

अनेन मनुना पश्चाद् इन्द्रादीन् पूजयेत्ततः ।
पुनर्देवीं समभ्यर्च्य गन्धपुष्पाक्षतादिभिः ॥ १२

वटुकक्षेत्रपालेभ्यो योगिनीभ्यो बलिं हरेत् ॥

सरस्वतीमहालयप्रकाशिते "साम्राज्यलक्ष्मीपीठिका" नामके ग्रन्थे साम्राज्यलक्ष्मीमन्त्रस्वरूपमेवं निर्दिष्टं दृश्यते — "ओं नमो भगवत्यै साम्राज्यदायै लक्ष्म्यै स्वाहा" इति । ईश्वरः ऋषिः । जगती छन्दः । साम्राज्यलक्ष्मीर्देवता । ओं बीजं । स्वाहा शक्तिः । कीलकं नोक्तम् ॥ मन्त्रपादैः षड्भिः षडङ्गन्यासाः । ध्यानादिकं यथायोग्यमिति ॥

**इति श्रीदक्षिणामूर्तिसंहितायां साम्राज्यदा (लक्ष्मी) यजनं नाम चतुर्थः पटलः**

## ॥ पञ्चमः पटलः ॥

ईश्वर उवाच –

अथ श्रीकोशविद्यानां चतुष्कं शृणु पार्वति ।
यस्य विज्ञानमात्रेण पुनर्जन्म न विद्यते ॥ १

श्रीविद्या च परं ज्योतिः परं (र) निष्कलदेवता ।
अजपा मातृका चैव पञ्चकोशाः प्रकीर्तिताः ॥ २

[1]प्रणवं पूर्वमुच्चार्य मायां हंसः पदं लिखेत् ।
ततः सोऽहं [2]शिरो देवी वसुवर्णयमीरिता ॥ ३

प्रणवश्चित्कला ज्ञेया मायया व्याप्तरूपिणी ।
"हंसः" पदेन देवेशि साक्षादात्मस्वरूपिणी ॥ ४

तत्रत्यबिन्दुत्रितयात् सृष्टिस्थितिलयात्मिका ।
प्रसूते बिन्दुनाद्येन वामेयं ब्रह्मरूपिणी ॥ ५

बिन्दुनाऽथ द्वितीयेन पालयन्ती जगत्त्रयम् ।
ज्येष्ठेयं वैष्णवी माया चाद्या सत्वगुणा प्रिये ॥ ६

अन्तेन बिन्दुना सर्वं ग्रसन्ती तमसावृता ।
[3]रौद्री बिन्दुरयं देवि प्रसूते चाम्बिकां तदा ॥ ७

आत्मानं दर्शयत्येषा हंसाख्या संहृतिर्यदा ।
तदेयं दर्पणाकारा ततो ज्योतिर्मयी भवेत् ॥ ८

---

1. श्रीविद्याविषयः सूचीकटाहन्यायमनुसृत्य पश्चात् वक्ष्यते ॥
2. ओं ह्रीं हंसः सोऽहं स्वाहा इति स्वरूपम् ॥
3. माया इति शेषः ॥

वर्णाभ्यां वह्निजायायाः परं ज्योतिरियं प्रिये ।
एवं विचारयन् मन्त्री साक्षाद् ब्रह्म भवेत्तु सः ॥ ९

ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्रं छन्द उच्यते ।
परंज्योतिर्मयी साक्षाद्देवता परिकीर्तिता ॥ १०

*प्रणवान्त्यद्वयं बीजं शक्तिः शेषं तु कीलकम् ।
स्वाहा तु हृदयं सोऽहं शिरो हंसः शिखा भवेत् ॥ ११

मायया कवचं तारबीजेन नयनत्रयम् ।
सृष्टया मन्त्रेण देवेशि समग्रेणास्त्रकं भवेत् ॥ १२

ज्ञानाग्नौ मातृकावर्णहविषा चाक्षराहुतिम् ।
अनेन मनुना हुत्वा क्षणान्निर्वाणगो भवेत् ॥ १३

इत आरभ्य श्रीविद्यादिपञ्चकोशविद्याः प्रकाश्यन्ते–सूचीकटाह-न्यायेन ज्योतिर्विद्यादिचतुष्टयं उपदिश्य पश्चात् श्रीविद्याप्रकाशनं करिष्यते । तत्र प्रथमं ज्योतिर्विद्या यथा–ओं ह्रीं हंसः सोऽहं स्वाहा इत्यष्टाक्षरी विद्या । ब्रह्मा ऋषिः । गायत्री छन्दः ज्योतिर्मयी परा देवता ॥ ओं बीजं स्वाहा शक्तिः हंसः सोऽहं कीलकम् । इष्टार्थे विनियोगः । स्वाहा हृदयाय नमः, सोऽहं शिरसे स्वाहा, हंसः शिखायै वषट्, ह्रीं कवचाय हुं, ओं नेत्रत्रयाय वौषट् । समग्रमूलेन सृष्टि-क्रमेण अस्त्राय फट् । संहारक्रमेण अङ्गन्यासान् विधाय सृष्टिक्रमेण अस्त्रम् इति षडङ्गानि ॥

इति श्रीदक्षिणामूर्तिसंहितायां आत्माष्टाक्षरपरञ्ज्योतिर्विधानं नाम पञ्चमः पटलः ॥

---

* ओं बीजं, स्वाहा शक्तिः, हंसः सोऽहं कीलकम् । संहारक्रमेण कराङ्गन्यासाः । स्वाहा हृदयाय नमः । सोऽहं शिरसे स्वाहा । हंसः शिखायै वषट् । ह्रीं कवचाय हुं । ओं नेत्रत्रयाय वौषट् । ओं ह्रीं हंसः सोऽहं स्वाहा अस्त्राय फट् ।

## ॥ षष्ठः पटलः ॥

ईश्वर उवाच –

अथ वक्ष्ये महादेवि परनिष्कलदेवताम् ।
यस्याः स्मरणमात्रेण चिदानन्दायते तनुः ॥ १

अनुग्रहादिर्देवेशि बिन्दुनादकलात्मकः ।
परनिष्कलदेवीयं परब्रह्मस्वरूपिणी ॥ २

शुक्लाम्बरपरीधाना शुक्लमाल्यानुलेपना ।
ज्ञानमुद्राङ्किता योगिपति(त्नी)वृन्देन सेविता ॥ ३

ऋषिर्ब्रह्मास्य गायत्रं मनोश्छन्दः क्रमाद्भवेत् ।
ब्रह्मैव देवता बीजशक्ती अं उं क्रमेण तु ॥ ४

मकारः कीलकं मोक्षफलज्ञानप्रदायिनी ।
स्वरद्वयस्य मध्ये तु क्षिप्त्वा त्यक्त्वा चतुष्टयम् ॥ ५

ऋ ॠ ऌ ॡ च देवेशि षडङ्गानि प्रविन्यसेत् ।
ततो यन्त्रं लिखेन्मन्त्री त्रिकोणं चाष्टपत्रकम् ॥ ६

चतुरस्रं चतुर्द्वारमण्डितं ज्ञानदं भवेत् ।
ब्रह्मरन्ध्रे विचिन्त्याथ तत्रावाह्य परेश्वरीम् ॥ ७

गन्धपुष्पादिभिः सम्यक् मनोज्ञैरुपचारकैः ।
अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ॥ ८

अकारेण च ऋग्रूपं ब्रह्माणं पुरतो यजेत् ।
सामवेदेन सहितं उकारेण हरिं यजेत् ॥ ९

देवीदक्षिणतः पश्चादन्त्यकोणे शिवं यजेत् ।
यजूरूपं मकारेण त्रिकोणे कथितं प्रिये ॥ १०

अष्टपत्रे चतुर्दिक्षु पुर आदिक्रमेण तु ।
आत्मान्तरात्मपरमज्ञानात्मानो (?) यजेत्प्रिये ॥ ११

निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिश्चतुष्टयम् ।
विदिक्षु पूजयेन्मन्त्रीं ततो ब्राह्म्यादिका यजेत् ॥ १२

तेष्वेव वसुपत्रेषु चतुरश्रे ततःपरम् ।
इन्द्रादिलोकपालांश्च पूर्वादिक्रमतो यजेत् ॥ १३

गन्धपुष्पादिनैवेद्यैस्तर्पणैः क्रमतो यजेत् ।
ज्ञानरूपो भवेन्मन्त्री मोक्षः स्वस्य (स्तस्य)करे स्थितः ॥ १४

अथ निष्कलविद्याविधानम् । ब्रह्मा ऋषिः । गायत्री छन्दः । निष्कलं ब्रह्म देवता । अं बीजं । उं शक्तिः । मं कीलकम् । मोक्षार्थे विनियोगः । अं कं खं गं घं ङं आं अङ्गुष्ठाभ्यां नमः । इं चं छं जं झं ञं ईं तर्जनीभ्यां स्वाहा । उं टं ठं डं ढं णं ऊं मध्यमाभ्यां वषट् । एं तं थं दं धं नं ऐं अनामिकाभ्यां हुं । ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां वौषट् । अं यं रं लं वं शं षं सं हं ळं क्षं करतलकरपृष्ठाभ्यां फट् इति कराङ्गन्यासाः । ध्यात्वा त्रिकोणाष्टपत्रचतुरस्रात्मकपीठे पूजनम् । अथावरणपूजा — अग्नीशासुरवायव्यकोणेषु मध्ये दिक्षु च अङ्गमन्त्रैः प्रथमा । त्रिकोणाग्रे अं ऋग्रूपिणे ब्रह्मरूपिणे नमः । दक्षकोणे उं सामवेदरूपिणे हरये नमः । वामकोणे मं यजूरूपिणे शिवाय नमः इति द्वितीया । अष्टपत्रेषु पुरस्तादारभ्य दिक्षु चतुर्षु — आत्मने० अन्तरात्मने० परमात्मने० ज्ञानात्मने० इति, विदिक्षु च निवृत्त्यै० प्रतिष्ठायै० विद्यायै० शान्त्यै० इति तृतीया । इन्द्रादिभिः चतुर्थी । ज्ञानरूपेण अवस्थानं फलम् ॥

इति श्रीदक्षिणामूर्तिसंहितायां प्रणवविद्यापरनिष्कलदेवतायजनं नाम षष्ठः पटलः ॥

## ॥ सप्तमः पटलः ॥

**ईश्वर उवाच —**

अजपाऽऽराधनं देवि कथयामि तवानघे ।
यस्य विज्ञानमात्रेण परं ब्रह्मैव देशिकः ॥ १

हंसः पदं परेशानि प्रत्यहं जपते नरः ।
मोहबद्धो न जानाति मोक्षस्तस्य न विद्यते ॥ २

श्रीगुरोः कृपया देवि ज्ञायते जप्यते सदा ।
उच्छ्वासनिःश्वासतया तदा बन्धक्षयो भवेत् ॥ ३

उच्छ्वासे चैव निःश्वासे हंस इत्यक्षरद्वयम् ।
तस्मात्प्राणस्तु हंसाख्य आत्माकारेण संस्थितः ॥ ४

षष्टिश्वासैर्भवेत्प्राणः षट्प्राणैर्नाडिका मता ।
षष्टिनाड्या त्वहोरात्रं जपसङ्ख्याऽजपामनोः ॥ ५

एकविंशतिसाहस्रं षट्शताधिकमीश्वरि ।
जपते प्रत्यहं प्राणी स्पन्दानन्दमयीं पराम् ॥ ६

उत्पत्तिर्जप आरम्भो मृतिरस्य निवेदनम् ।
विना जपेन देवेशि जपो भवति मन्त्रिणः ॥ ७

अजपेयं ततः प्रोक्ता भवपाशनिकृन्तनी ।
श्रीगुरोः कृपया देवि लभ्यते नान्यथा प्रिये ॥ ८

एवं जपं महेशानि प्रत्यहं विनिवेदयेत् ।
गणेशब्रह्मविष्णुभ्यो हराय च परेश्वरि ॥ ९

जीवात्मने क्रमेणैव तथैव परमात्मने ।
षट्शतानि सहस्राणि षडेव च तथा पुनः ॥ १०

षट्सहस्राणि विमले सहस्रं चैतदेव हि ।
पुनः सहस्रं गुरवे क्रमेणैव निवेदयेत् ॥ ११

आधारे स्वर्णवर्णेऽस्मिन् वादिसान्तानि संस्मरन् ।
धृतसौवर्णवर्णानि वर्णानि परमेश्वरि ॥ १२

स्वाधिष्ठाने विद्रुमाभे बादिलान्तानि संस्मरेत् ।
विद्युत्पुञ्जप्रभाऽऽभानि सुनीलमणिपूरके ॥ १३

डफान्तानि महानीलप्रभाणि च विचिन्तयेत् ।
पिङ्गवर्णे महावह्निकर्णिकाऽऽभानि चिन्तयेत् ॥ १४

कादिठान्तानि वर्णानि चतुर्थेऽनाहते प्रिये ।
विशुद्धौ धूम्रवर्णे च रक्तवर्णान् स्वरान्न्यसेत् ॥ १५

आज्ञायां विद्युदाभायां शुभौ हक्षौ च चिन्तयेत् ।
कर्पूरद्युति-संराजत्सहस्रदलनीरजे ॥ १६

नादात्मकं ब्रह्मरन्ध्रे जानीहि परमेश्वरि ।
एतेषु सप्तचक्रेषु स्थितेभ्यः परमेश्वरि ॥ १७

जपं निवेदयित्वा तेभ्योऽहोरात्रभवं प्रिये ।
सहजं परमेशानि न्यासं कुरु विचक्षणे[1] ॥ १८

ऋषिर्हंसोऽव्यक्तपूर्वं गायत्रं छन्द उच्यते ।
देवता[2] परमादिस्तु हंसोऽहं[3] बीजमुच्यते ॥ १९

---

1. न्यासं कुर्याद्विचक्षणः । 2. परमहंसो देवता । 3. हं बीजं ।

स:शक्तिः कीलकं सोऽहं प्रणवस्तत्वमेव हि ।
नादः स्थानं तथा श्वेतो वर्णस्तु परमेश्वरि ॥ २०

उदात्तः स्वर इत्येवं मनोरस्य प्रकीर्तितः ।
मोक्षार्थे विनियोगः स्यादेवं जानीहि पार्वति ॥ २१

ततः षडङ्गविन्यासं कुर्याद्देहस्य शुद्धये ।
सूर्यं सोमं तथा देवि निरञ्जनमतः परम् ॥ २२

निराभासं चतुर्थ्यन्तस्वाहान्तान् क्रमतो न्यसेत् ।
कवचान्तान् प्रविन्यस्य ततस्तनुपदं स्मरेत् ॥ २३

तनुः सूक्ष्मा चतुर्वर्णानुक्त्वा देवि प्रचोदयात् ।
स्वाहान्तेनैव नयनमव्यक्तपदपूर्वकः ॥ २४

प्रबोधात्मा चतुर्थ्यग्निजायान्तोऽस्त्रो निगद्यते ।
प्राणानायम्य विधिवन्मन्त्री सम्यक्समाहितः ॥ २५

मूलमन्त्रेण देवेशि वामेनाऽऽपूर्य चोदरम् ।
कुम्भकेन त्रिरावृत्या दक्षिणेन विरेचयेत् ॥ २६

कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् ।
प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना ॥ २७

अस्य हंसस्य देवेशि निगमागमपक्षकौ ।
अग्नीषोमावथो वापि पक्षौ तारः शिरो भवेत् ॥ २८

बिन्दुत्रयं शिखा नेत्रं मुखे नादः प्रतिष्ठितः ।
शिवशक्तिपदद्वन्द्वं कालाग्नी पार्श्वयुग्मकम् ॥ २९

अयं परमहंसस्तु सर्वव्यापी प्रकाशवान् ।
सूर्यकोटिप्रतीकाशः स्वप्रकाशेन भासते ॥ ३०

संहाररूपी हंसोऽयं विवेकं दर्शयत्यपि ।
अजपानाम गायत्री त्रिषु लोकेषु दुर्लभा ॥ ३१

अजपां जपतो नित्यं पुनर्जन्म न विद्यते ।
षट्शतान्यधिकान्यत्र सहस्राण्येकविंशतिः ॥ ३२

अहोरात्रं चरेद्वायुः स जपो मोक्षदायकः ॥ ३३

इति श्रीदक्षिणामूर्तिसंहितायां अजपाविधानं नाम सप्तमः पटलः ॥

## ॥ अष्टमः पटलः ॥

ईश्वर उवाच –

अथ वक्ष्ये महेशानि मातृकां लोकमातरम् ।
अकारादिक्षकारान्तवर्णावयवदेवताम् ॥ १

ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्रं छन्द उच्यते ।
मातृका देवता देवि हलो बीजानि शक्तयः ॥ २

स्वरास्तु परमेशानि [1]जाताऽव्यक्तिस्तु (क्तास्तु) कीलकम् ।
अनिर्वाच्या हलो वर्णाः शक्त्या व्यक्ता भवन्ति हि ॥ ३

शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते ।
असद्रूपा हलोवर्णा शक्त्यासन्नाः पराङ्मुखाः ॥ ४

स्फुरन्मात्रास्तदा चार्याः सुमुखा व्यक्तवर्णकाः ।
ऋ ॠ लृ ॡ परित्यज्य षण्मुखस्वरमध्यगाः ॥ ५

वर्गषट्कक्रमेणैव सप्तमः क्रोधसंयुतः ।
अन्ते निक्षिप्य देवेशि षडङ्गानि प्रविन्न्यसेत् ॥ ६

कलापत्राम्बुजे[2] कण्ठे स्वरान् सम्यक् प्रविन्न्यसेत् ॥ ७

सूर्यपत्राम्बुजे नित्येऽनाहते द्वादश न्यसेत् ।
मणिपूरे महादेवि दशपत्रे प्रविन्न्यसेत् ॥ ७

दशवर्णान् लिङ्गमध्ये षड्दले षडथेश्वरि ।
चतुर्दले तथाऽऽधारे चतुर्वर्णास्ततो न्यसेत् ॥ ९

---

1. बिन्दवः कीलकानि । 2. अन्तर्मातृकान्यासस्थानानां निर्देशः ।

भ्रूमध्ये द्विदले हक्षावित्यन्तर्मातृकां न्यसेत् ।
ब्रह्मरन्ध्रे[1] तथा वक्त्रो वेष्टने[2] नयनद्वये[3] ॥ १०

श्रुतिनासापुटद्वन्द्वगण्डोष्ठद्वयकेषु च ।
दन्तयुग्मे[4] च मूर्धास्यद्वये षोडश विन्यसेत् ॥ ११

दोःपत्सन्धिषु साग्रेषु पार्श्वयुग्मे न्यसेत्क्रमात् ।
पृष्ठनाभिद्वये चैव जठरे विन्न्यसेदथ ॥ १२

त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ।
प्राणजीवौ च परमौ यकारादिषु संस्थिताः ॥ १३

क्रमेण देवदेवेशि न्यस्तव्या एतदात्मकाः ।
हृद्दोर्मूलेषु संन्यस्य तथापरगले न्यसेत् ॥ १४

कक्षद्वये हृदारभ्य पाणिपादद्वये तथा ।
जठराननयनव्याप्तं न्यसेदित्यर्णरूपिणीम् ॥ १५

अनेन न्यासरूपेण मन्त्री न्यासस्वरूपवान् ।
ध्यायेद्वर्णस्वरूपाढ्यां स्वरवक्त्रां क्रमेण हि ॥ १६

कचवर्गकरांरम्यां टतवर्गपदाम्बुजाम् ।
पवर्गचारुपार्श्वाङ्गलसच्छातोदरीं वराम् ॥ १७

यशवर्गाङ्गसुभगां पीनोन्नतघनस्तनीम् ।
नितम्बबिम्बगहनां शुक्लाक्षीं क्षाममध्यमाम् ॥ १८

शुक्लमाल्यानुरागाङ्गीं अक्षस्रक्कुम्भशोभिताम् ।
चिन्तालिखितसत्पाणिं समग्रवरदायिनीम् ॥ १९

---

1. बहिर्मातृकास्थानानां निर्देशः । 2. मुखं परितः वेष्टने ।
3. प्रथमं दक्षभागे सर्वत्र । 4. ऊर्ध्वदन्तपङ्क्तौ ततः अधोदन्तपङ्क्तौ ।

एवं ध्यात्वा ततो देवीं यजनं च सुधीश्चरेत् ।
आदौ वृत्तौ[1] कर्णिकाढ्यं हंसानुग्रहसर्गवान्[2] (?)। २०

बाह्येऽष्टदलमालिख्य केसरेषु स्वरान् लिखेत् ।
युग्मयुग्मप्रभेदेन ततोऽर्कपुटकेषु च ॥ २१

कादिवर्गाष्टकं योज्यं ळं क्षं च परमेश्वरि ।
चतुरस्रं ततः कुर्यात् सिद्धिदं दिक्षु संलिखेत् ॥ २१

ठकाराणां चतुष्कं च रेखान्तं बाह्यतस्तथा ।
कारुणं[3] (?) च समालिख्य देवीमावाहयेत्सुधीः ॥ २३

आदौ पीठार्चनं कृत्वा नवशक्तिपुरस्कृतम् ।
मेधा विज्ञा प्रभा विद्या धीधृतिस्मृतिबुद्धयः ॥ २४

विद्येश्वरी च पूर्वादिदिक्षु मध्ये प्रपूजयेत् ।
पश्चादावाह्य गन्धादीनुपचारान्प्रकल्पयेत् ॥ २५

अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ।
नियोज्य स्वरयुग्मान्ते नमस्कारं पृथक् पृथक् ॥ २६

अष्टधा पूजयेद्देवि केसरेषु पृथक् पृथक् ।
तथैव कादिवर्गेषु नमस्कारं क्षिपेत्पृथक् ॥ २७

अष्टधावर्गपूजेयं ततो ब्रह्मा(ब्राह्मया) दिभिर्यजेत् ।
लोकपालैस्ततो देवीं समाराध्य यजेत्सुधीः ॥ २८

लक्षमात्रं दशांशेन हुनेत्पालाशपुष्पकैः ।
त्रिमध्ववर्तैर्मिताहारः पुरश्चारी ततो भवेत् ॥ २९

---

1. आदौ वृत्तं । 2. सर्गवत् । 3. कारणं वाग्भवबीजम् (ऐं) ।

अथ अन्तर्बहिर्मातृकान्यासान्ते मातृकादेवीं ध्यात्वा मातृकापीठे पूजां कुर्यात् ॥ प्रथमं वृत्तं विलिख्य तन्मध्ये हंसः इति विलिखेत् । तद्बहिः अष्टपत्रं तत्र दलेष्वष्टसु च द्वन्द्वशः स्वरवर्णान् विलिख्य तद्बहिः द्वादशदले ळक्षद्वयं विलिखेत् तद्बहिः भूपुरं च ॥ तत्र भूपुरे ठ वर्ण-चतुष्कं दिक्षु विलिख्य कोणेषु वाग्भवं च विलिख्य पीठशक्तिपूजापुरःसरं तत्र देवीमावाह्य पूजयेत् । मेधा[प्र]विज्ञाप्रभाविद्याधीधृतिस्मृति-बुद्धिविद्येश्वरीः कर्णिकामध्ये पूर्वादिदिक्षु मध्ये च सम्पूज्य देवीं मध्य आवाह्य (प्राणप्रतिष्ठापूर्वं) गन्धाद्युपचारान् कल्पयेत् । तत्रैव कर्णिकायां अग्नीशासुरवायव्यकोणेषु मध्ये दिक्षु च अङ्गमन्त्रैः पूजनम् । ततः अष्टदलेषु अं आं नमः इं ईं नमः इत्यादिभिः स्वरवर्णान्, द्वादशसु दलेषु कं खं गं नमः इत्यारभ्य ळं क्षं नमः इति सम्पूज्य पुनः दलाष्टके ब्राह्म्याद्याः भूपुरे इन्द्रादींश्च सम्पूज्य पुनः समष्ट्या देवीं च मध्ये समाराधयेत् ॥ ततः अं नमः आं नमः इत्यादिरीत्या लक्षावृत्या जपं कुर्यात् । ततः त्रिमधुसिक्तैः पलाशपुष्पैः दशांशं जुहुयात् । एवं कृते साधकः कृतपुरश्चर्यो भवति । इति पञ्चावरणपूजनं मातृकादेव्याः ॥

**इति श्रीदक्षिणामूर्तिसंहितायां मातृकाविधिर्नाम अष्टमः पटलः ॥**

## ॥ नवमः पटलः* ॥

ईश्वर उवाच —

पञ्चसिंहासनगता विद्या जप्या महेश्वरि ।
मया तत्पुरुषास्येन जप्यते तच्छृणु प्रिये ॥ १

अजपासदृशी विद्या त्रिषु लोकेषु दुर्लभा ।
प्रणवाद्यं बिन्दुनादसहितं कुरु सुव्रते ॥ २

एतद् वाग्भवमुच्चैर्वा सहितं कामबीजकम् ।
वामनेत्रेन्दुबिन्द्वन्तं सर्गवान् भृगुरव्ययः ॥ ३

अनुग्रहेण संयुक्ता विद्येयं त्र्यक्षरी भवेत् ।
ऋषिस्तु दक्षिणामूर्तिरहं शिरसि विन्यसेत् ॥ ४

छन्दः पङ्क्तिस्तु विज्ञेया मुखे विन्यस्य देवता ।
हृदये त्रिपुरेशानी वाग्भवं बीजमुच्यते ॥ ५

शक्तिबीजं शक्तिरेव कामबीजं च कीलकम् ।
एषा विद्या महेशानि पुरुषार्थप्रदायिनी ॥ ६

पादादिनाभिपर्यन्तमाद्यं नाभेस्तथा गले(ऽऽगलम्) ।
मध्यमं शक्तिबीजं च गलादामस्तकं न्यसेत् ॥ ७

वामपाणितले तद्वत् दक्षपाणितले न्यसेत् ।
करयोः सम्पुटे चैकमेवं न्यासद्वयं भवेत् ॥ ८

एतत्सम्पुटितां पश्चान्मातृकां विन्यसेत्सुधीः ।
नवयोन्यङ्कितं न्यासं कुर्यात्कमललोचने ॥ ९

---

* अस्मिन् पटले बालात्रिपुरसुन्दर्याः पूजाक्रमः वर्ण्यते ॥

कर्णयोश्चिबुके देवि शङ्खास्येषु दृशोर्नसि ।
अंसयोर्हृदये देवि न्यसेत्कूर्परकुक्षिषु ॥ १०

जानुद्वयान्धुपद्द्वन्द्वगुह्येऽनुक्रमतो न्यसेत् ।
पार्श्वहृत्सु स्तनद्वन्द्वकण्ठेष्वपि च विन्यसेत् ॥ ११

बीजत्रिकं क्रमेणैव नवधा विन्यसेत्प्रिये ।
वीप्सयाङ्गानि विन्यस्य पञ्चबाणान्न्यसेत्सुधीः ॥ १२

थकारान्तं समालिख्य द्विधा वह्निसमन्वितम् ।
अनन्तवामनेत्राभ्यां बिन्द्विन्दुपरिभूषितम् ॥ १३

कामबीजं च कालादि तदादिपृथिवीयुतम् ।
दीर्घकर्णेन्दुबिन्द्वाढ्यमजपान्तं लिखेत्क्रमात् ॥ १४

ललाटगलहृन्नाभिमूलाधारेषु विन्न्यसेत् ।
पुनरेतेषु बीजानि पञ्चसङ्ख्यानि विन्यसेत् ॥ १५

*ह्रींक्लीमात्मकवाग्बीजैश्चतुर्थं बाणमालिखेत् ।
ततः स्त्रीमात्मकं पञ्चकामा एते प्रकीर्तिताः ॥ १६

एवं विन्यस्तदेहःसन् प्राणानायम्य पूर्ववत् ।
ध्यायेद्देवीं महेशानीं कदम्बवनमध्यगाम् ॥ १७

रत्नमण्टपमध्ये तु महाकल्पवनान्तरे ।
मुक्तातपत्रछायायां रत्नसिह्मानने स्थिताम् ॥ १८

---

* ह्रीं कामदेवाय नमः । क्लीं मन्मथाय नमः । ऐं कन्दर्पाय नमः । ब्लूं मकरध्वजाय नमः । स्त्रीं मनोभवाय नमः इति पञ्चमनोभव (काम) मन्त्राः अन्यत्र प्रोक्ता अपि अत्र सङ्ग्राह्याः ॥

अनर्घ्य(र्ब)रत्नघटितमकुटां कुण्डलोज्ज्वलाम् ।
हारग्रैवेयसद्रत्नचित्रितां कङ्कणोज्ज्वलाम् ॥ १९

हारमुक्तालसद्भूषां शुद्धक्षौमविराजिताम् ।
हारमञ्जीरसुभगां रक्तोत्पलपदाम्बुजाम् ॥ २०

शुभ्राङ्गरागसुभगां कर्पूरशकलोज्ज्वलाम् ।
पुस्तकं चाभयं वामे दक्षिणे चाक्षमालिकाम् ॥ २१

वरदानरतां देवीं सम्यक्सारस्वतप्रदाम् ।
एवं ध्यात्वा जपेन्मन्त्रं वर्णलक्षं समाहितः ॥ २२

तद्दशांशेन जुहुयात् किंशुकैस्त्रिमधूत्करैः ।
अथ वक्ष्ये महेशानि यन्त्रं सर्वार्थसिद्धिदम् ॥ २३

आदौ शक्तिं समालिख्य तस्या उपरि संलिखेत् ।
तामौघवस्तृता(?) किञ्चित् सम्पुटीकृत्य वह्निना ॥ २४

सन्धिभेदक्रमेणैव नवयोनिर्यथा भवेत् ।
ह्सौङ्कारं लिखेन्मध्ये कामाख्यं चाष्टयोनिषु ॥ २५

बहिर्वृत्तं समालिख्य दलै राजितमष्टभिः ।
केसरेषु स्वरा योज्या द्वन्द्वशः परमेश्वरि ॥ २६

कचटास्तपयावर्णाः सशक्षाः परमेश्वरि ।
अष्टपत्रेषु संलिख्य ततः शूलाष्टकं लिखेत् ॥ २७

पत्राग्रेषु ततो मन्त्री लिखेद्वर्णान् क्रमेण तु ।
स्वराद्यान् तेषु शूलेषु पूर्वादिक्रमतो यजेत् (लिखेत्) ॥ २८

ङछजानग्निदिग्भागे झञठान् दक्षिणे लिखेत् ।
डढणान् नैर्ऋतेभागे थदधान् पश्चिमे लिखेत् ॥ २९

नफबान् वायुदिग्भागे भमरान् उत्तरे लिखेत् ।
लवषानीशदेशे तु ततो वृत्तं समालिखेत् ॥ ३०

वृत्तं मातृकयाविद्धं ततो भूबिम्बमालिखेत् ।
चतुर्द्वारविशोभाढ्यं मध्ये पुष्पं विनिक्षिपेत् ॥ ३१

पीठार्चनं ततः कुर्यान्मन्त्री देवीं मनोहराम् ।
वामा ज्येष्ठा च रौद्री च त्वम्बिकेच्छा ततःपरम् ॥ ३२

ज्ञाना क्रिया कुब्जिका च बिल्बी देवी विषघ्निका ।
दूतरी च तथानन्दा संपूज्या अभितः प्रिये ॥ ३३

सिह्मासनं च सम्पूज्य मध्ये बीजेन मान्त्रिकः ।
सदाशिवमहाप्रेतपद्मासनपदं लिखेत् ॥ ३४

ङेऽन्तं नमोऽन्तेन देवि यजेत्सिह्मासनं प्रिये ।
मुक्ताछत्रशरच्चन्द्रचन्द्रिकाकारचामरे ॥ ३५

उशीरक्षिप्तसच्चन्द्रकलाव्यजनयुग्मकम् ।
प्रान्तमुक्तावलीराजत्स्वर्णादर्शं च वीटिकाम् ॥ ३६

अलङ्कारमयीं पेटीं कारण्डशशिपूरकम् ।
कर्पूरक्षोदभरितचषकं स्वर्णकान्तिकम् ॥ ३७

सत्पुष्पपल्लसम्पूर्णपात्रं च दधतीः क्रमात् ।
ध्यात्वा वामादिकाः पश्चात् देवीमावाहयेत्प्रिये ॥ ३८

उपचारैः समभ्यर्च्य तर्पणानि समर्च (र्प)येत् ।
लयाङ्गं विन्यसेद्देवि देहे मुद्राश्च दर्शयेत् ॥ ३९

अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ।
क्रमेण पुर आरभ्य रतिप्रीतिमनोभवाः ॥ ४०

त्रिकोणाग्रेषु देवेशि तद्बाह्ये बाणदेवताः ।
देवताया दक्षिणे द्वे द्वे वामे रूपं (?) अग्रतः ॥ ४१

अनङ्गाऽनङ्गकुसुमा तथा चानङ्गमेखला ॥
अनङ्गमदना देवि सुभगा च भगा तथा ॥ ४२

भगसर्पिण्यथो देवि तथा च भगमालिनी ।
पुर आरभ्य देवेशि प्रादक्षिण्येन पूजयेत् ॥ ४३

अष्टकोणेषु तद्बाह्ये वसुपत्रेषु चार्चयेत् ।
असिताङ्गं तथा ब्राह्मीं रुरुं माहेश्वरीं तथा ॥ ४४

चण्डं कौमारिकां चैव क्रोधं चैव तु वैष्णवीम् ।
उन्मत्तं चैव वाराहीं तथा चैव कपालिनम् ॥ ४५

माहेन्द्रीं भीषणं देवि चामुण्डां च ततः परम् ।
संहारभैरवं देवि महालक्ष्मीं क्रमाद्यजेत् ॥ ४६

युग्मायुग्मप्रभेदेन स्वरैर्देवास्तु भैरवाः ।
कामरूपं तथादेवि मलयं च द्वितीयकम् ॥ ४७

पीठं कोल्लगिरिं पीठं कुलान्तकमतःपरम् ।
संहारं चैव देवेशि जालन्धरमतः परम् ॥ ४८

उड्याणं देवीकोटं च पीठाष्टकमिदं यजेत् ।
बहिर्वृत्तं महेशानि सम्पूज्या भैरवा दश ॥ ४९

हेतुकं भैरवं चाद्यं द्वितीयं त्रिपुरान्तकम् ।
वेतालमग्निजिह्वं च कालान्तकमतःपरम् ॥ ५०

कपालिनं चैकपादं भीमरूपमतः परम् ।
अचलं हाटकं चैव पुर आरभ्य पूजयेत् ॥ ५१

अत ऊर्ध्वं ततो देवि चतुरस्रे क्रमेण तु ।
इन्द्रादयस्तु सम्पूज्यास्ततस्तु वटुकादयः ॥ ५२

वटुकं योगिनीं क्षेत्रपालं गणपतिं यजेत् ।
पूर्वादिदिक्षु कोणेषु वसूनर्कान् क्रमात्प्रिये ॥ ५३

रुद्रांश्च सर्वभूतांश्च पुनर्देवीं समर्चयेत् ।
वनस्पतिरसोत्पन्नो गन्धाढ्यो गन्ध उत्तमः ॥ ५४

आघ्रेयः सर्वभूतानां धूपोऽयं प्रतिगृह्यताम् ।
एष मन्त्रस्तु बीजान्ते धूपमन्त्र उदाहृतः ॥ ५५

सुप्रकाशो महादीपः सर्वतस्तिमिरापहः ।
सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥ ५६

तथैव दीपमन्त्रोऽयं शृणु चारात्रिकं प्रिये ।
समस्तचक्रसद्रश्मिमण्डले ब्रह्मरूपिणि ॥ ५७

आरात्रिकं गृहाणेदं त्रिपुरे मम सिद्धये ।
आरात्रिकमिदं देवि विद्यान्ते मनुरीरितः ॥ ५८

हेमपात्रगतं दिव्यं परमान्नं तु संस्कृतम् ।
पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि ॥ ५९

उपहारमनुर्देवि विद्यान्ते स्वयमीरितः ।
यथाशक्ति जपं कृत्वा नित्यहोमं समाचरेत् ॥ ६०

पञ्चाहुतीस्तु मूलेन षडङ्गानि च होमयेत् ।
नित्यहोमप्रकारोऽयं सर्वविघ्नान् व्यपोहति ॥ ६१

अथान्यं संप्रवक्ष्यामि सर्वविघ्ननिवृत्तये ।
अग्निराक्षसवायव्यशिवकोणेषु मन्त्रवित् ॥ ६२

त्रिकोणवृत्तभूबिम्बमण्डितानि समालिखेत् ।
मण्डलानि च चत्वारि तत्र पत्रासनं क्षिपेत् ॥ ६३

वटुकाय नमो वान्ते गान्ते गणपतिं तथा ।
आदौ सबिन्दु यां चैव योगिनीभ्यो नमः स्मरेत् ॥ ६४

क्षमन्ते क्षेत्रपालाय नमो मन्त्रचतुष्टयम् ।
एभिर्मन्त्रैर्वेदसङ्ख्यैर्मण्डलानि प्रपूजयेत् ॥ ६५

ऐह्येहि देवीपुत्रान्ते वटुकान्तेऽथ नाथ च ।
कपिलान्ते जटाभार भासुरान्ते त्रिणेत्र च ॥ ६६

ज्वालामुख ततः सर्वविघ्नान्नाशय नाशय ।
सर्वोपचारसहितं बलिं गृह्णपदद्वयम् ॥ ६७

वह्निजायान्वितो मन्त्रो वटुकस्य उदाहृतः ।
ऊर्ध्वं ब्रह्माण्डतो वा ते दिव्यन्ते गगनेति च ॥ ६८

*तले भूपदमालिख्य तले चैव तु निष्कले ।
वा पातालेऽनले वान्ते सलिलान्ते च संलिखेत् ॥ ६९

पवनान्ते च ये यत्नकुत्रान्ते च स्थिता इति ।
वा क्षेत्रे चैव पीठोपपीठादिषु च संलिखेत् ॥ ७०

ततः कृतपदाधूपदीपादि च पदं लिखेत् ।
केन प्रीताश्च देव्यश्च सदा नः शुभसंलिखेत् ॥ ७१

बल्यन्ते विधिना चैव पान्तु देवेन्द्र संलिखेत् ।
वन्द्याश्च यां समालिख्य योगिनीभ्योऽग्निवल्लभा ॥ ७२

सर्वान्ते योगिनीनान्ते कवचास्त्राग्निवल्लभा ।
योगिनीनामयं मन्त्रः क्षेत्रपालमनुं शृणु ॥ ७३

षड्दीर्घस्वरभेदेन क्षकारं भेदयेत्प्रिये ।
कवचस्थानशब्दान्ते क्षेत्रपाल समालिखेत् ॥ ७४

---

* ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले वा पाताले वानले वा सलिलपवनके यत्र कुत्र स्थिता वा । क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादिकेन प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु देवेन्द्रवन्द्याः । यां योगिनीभ्यः स्वाहा । सर्व योगिनीभ्यो हुं फट् स्वाहा । क्षां क्षीं क्षूं क्षैं क्षौं क्षः हुं क्षेत्रपाल धूपदीपादिसहितं बलिं गृह्ण गृह्ण सर्वान् कामान् पूरय स्वाहा इति अयं क्षेत्रपालमनुः । गां गीं गूं गैं गौं गं गः गणपतये वरवरद सर्वजनं मे वशमानय सर्वोपचार सहितं बलिं गृह्ण गृह्ण स्वाहा इति गणेशबलिमन्त्रः ॥

धूपदीपादिवि(स)हितं बलिगृह्णद्विधा लिखेत् ।
सर्वकामान् पूरयाग्निवल्लभा क्षेत्रपोमनुः ॥ ७५

गां गी गूं गं समालिख्य गणपान्ते तये लिखेत् ।
वर शब्दं द्विधादान्ते ततःसर्वजनं पदम् ॥ ७६

मे वशं चानय प्रान्ते ततःसर्वोपचार च ।
सहितं च बलिं गृह्ण गृह्णस्वाहा मनुः प्रिये । ७७

गणेशस्य वरारोहे मन्त्रैरेभिर्बलिं हरेत् ।
वटुकस्य तु तर्जन्या सहाङ्गुष्ठेन वा प्रिये ॥ ७८

वामाङ्गुष्ठानामिकाभ्यां क्षेत्रपालस्य कथ्यते ।
तर्जनी केवला चाथ गणेशस्य तु मध्यमा ॥ ७९

गजवक्त्राकृतिर्देवि योगिनीनां तु कथ्यते ।
अङ्गुष्ठमध्यमानामा योन्याकारेण योजयेत् ॥ ८०

बलिदानविधौ मन्त्री मुद्राः सन्दर्शयेत् क्रमात् ।
स्नात्वा नत्वा पुनर्देवि देवीमात्मनि योजयेत् ॥ ८१

आत्मविद्या शिवैस्तत्त्वैर्गुरुं सन्तोष्य देवताम् ।
आनन्दसहितो मन्त्री सर्वकर्माणि साधयेत् ॥ ८२

इति श्रीत्रिपुरासमाराधनविधिः ॥

ईश्वर उवाच —

महासिंहासनगता विद्येयं त्रिपुरेश्वरी ।
पूर्वाम्नायेश्वरी विद्या विद्येयं परमेश्वरि ॥ ८३

शिवचन्द्राग्निवामाक्षि बिन्दुनादात्मकं ततः ।
चन्द्रेशवह्निवामाक्षीबिन्दुनादमयं शिवे ॥ ८४

कलाढ्यमन्ते योनिं च तुर्यबीजमुदाहृतम् ।
श्रीबीजं कुरु तार्तीयं विद्यावेदाक्षरी भवेत् ॥ ८५

ऊर्मिणीनाम विद्येयं पूर्वाम्नायाधिदेवता ।
अनया विद्यया देवि देवी सम्मानिता प्रिये ॥ ८६

पूर्वसिंहासनगता भोगमोक्षफलप्रदा ।
मयैषा पूर्ववक्त्रेण जप्यतेऽद्यापि सुव्रते ॥ ८७

इति श्रीदक्षिणामूर्तिसंहितायां पूर्वाम्नायसिंहासनविद्याविवरणं नाम नवमः पटलः ॥

## ॥ दशमः पटलः ॥

ईश्वर उवाच —

दक्षिणास्येन देवेशि ललिता त्रिपुरा पुरा ।
कामेश्वरी रक्तनेत्रा मया विद्या प्रजप्यते ॥ १

शक्तिबीजं वाग्भवे तु कामराजं तु पूर्ववत् ।
अन्त्यं शिवसमायुक्तं त्रिपुरेश्याः परेश्वरि ॥ २

इयं तु ललिता देवी महासौभाग्यवर्धिनी ।
न्यासपूजादिक सर्वं त्रिपुरेशीव नान्यथा ॥ ३

ध्यानमस्याः प्रवक्ष्यामि साधकानां तु सिद्धये ।
उद्यत्सूर्यसहस्राभां माणिक्यमकुटोज्ज्वलाम् ॥ ४

रत्नकुण्डलमुक्तालीपदकाङ्गदभूषिताम् ।
रत्नमञ्जीरसुभगां रत्नवस्त्रानुलेपनाम् ॥ ५

पाशाङ्कुशौ पुस्तकं च दधतीमक्षमालिकाम् ।
सर्वाङ्गसुन्दरीं ध्यायेत् सर्वसम्पत्तिहेतवे ॥ ६

इति ललितापूजाविधिः ॥

ईश्वर उवाच –

केवलं कामबीजं तु कामेशीबीजमुच्यते ।
ऋषिः कामोऽस्य मन्त्रस्य गायत्रं छन्द उच्यते ॥ ७

कामेश्वरी देवता स्यात् *कतुर्ये बीजशक्तिके ।
पृथिवीकीलकं प्रोक्तं महावश्यकरी परा ॥ ८

---

* कं बीजं, ईं शक्तिः लं कीलकम् ।

[1] षड्दीर्घस्वरभेदेन षडङ्गानि प्रविन्यसेत् ।
पूर्वोक्तपञ्चबाणांश्च पूर्ववद्विन्यसेत्प्रिये ॥ ९

जपाकुसुमसङ्काशां धनुर्बाणधरां स्मरेत् ।
नानालङ्कारसुभगां मोहयन्तीं जगत्त्रयम् ॥ १०

अर्कलक्षं जपेन्मन्त्रं बन्धूककुसुमैर्हुनेत् ।
तद्दशांशेन देवेशि पुरश्चारी ततो भवेत् ॥ ११

अथ यन्त्रं प्रवक्ष्यामि त्रैलोक्याकर्षणक्षमम् ।
त्रिकोणं चाष्टपत्रं च ततो भूबिम्बमालिखेत् ॥ १२

मध्ये विदर्भितं बीजं साध्यसाधकलाञ्छिताम् ।
कोणत्रयेषु विद्यां च पृथग्वसुदलेष्वपि ॥ १३

दलाग्रेषु च संलिख्य चतुरश्रेऽष्टधा लिखेत् ।
त्रैलोक्यमोहनं यन्त्रं त्रिषु लोकेषु दुर्लभम् ॥ १४

मध्ये पुष्पं विनिक्षिप्य ततः पीठार्चनं स्मरेत् ।
मोहिनी क्षोभिणी चैव त्रासिनी स्तम्भिनी तथा ॥ १५

आकर्षिणी द्राविणी च तथैवाह्लादिनी क्रमात् ।
क्लिन्ना च क्लेदिनी चैव दिक्षु मध्ये च पूजयेत् ॥ १६

ततः सिह्मासने पश्चाद्देवीमावाहयेत्प्रिये ।
उपचारैः समाराध्य [2]गुह्यमुद्रां प्रदर्शयेत् ॥ १७

अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ।
त्रिपुरेशीव बाणाद्यमर्चनं परमेश्वरि ॥ १८

---

1. क्लां क्लीमित्यादिभिन्यासः ॥ 2. योनिमुद्रामित्यर्थः ॥

आदावनङ्गरूपां च त्वनङ्गदमनां[मदनां] तथा ।
अनङ्गमन्मथां चैव त्वनङ्गकुसुमां प्रिये ॥ १९

पञ्चमीं च पठेत्तद्वदनङ्गकुसुमातुराम् ।
अनङ्गशिशिरां चैव तथा चानङ्गमेखलाम् ॥ २०

अनङ्गदीपिकामष्टदलेषु क्रमतो यजेत् ।
इन्द्रादयश्च सम्पूज्याः पुनराराधयेच्छिवाम् ॥ २१

इति कामेश्वरीपूजाविधिः ॥

**ईश्वर उवाच —**

अथ वक्ष्ये महादेवि दक्षिणाम्नायदेवताम् ।
एमो मध्यगतं क्लिन्ने कामबीजं ततो लिखेत् ॥ २२

मदद्रवे कुले चोक्त्वा त्रिपुरेश्यासनं प्रिये ।
वह्निमद्द्रुद्रवर्णेयं दक्षिणाम्नायदेवता ॥ २३

भोगिनीनाम विद्येयं त्रिषु लोकेषु विश्रुता ।
अनया विद्यया देवि त्वयं सम्मानितं सदा ॥ २४

इति श्रीदक्षिणामूर्तिसंहितायां दक्षिणाम्नायसिंहासनविद्याविवरणं नाम दशमः पटलः ॥

## ॥ एकादशः पटलः ॥

ईश्वर उवाच –

देवि दक्षिणवक्त्रेण मयाद्यापि प्रजप्यते ।
विद्याचतुष्टयं साक्षादमृतानन्दविग्रहम् ॥ १

महासिंहासनगतां तत्र सञ्जीविनीं शृणु ।
मायाबीजं समालिख्य शिवचन्द्रौ समालिखेत् ॥ २

अनुस्वारविसर्गाभ्यां मण्डितौ क्रमतः प्रिये ।
सञ्जीविनी च जूं जीवं प्राणं ग्रन्थिसमालिखेत्[1] ॥ ३

कुरु शब्दं तृतीयं च वह्निजायान्वितो मनुः ।
विंशदर्णः ऋषिः शुक्रो गायत्रं छन्द उच्यते ॥ ४

सञ्जीविनी देवताद्या शक्तिरन्त्यादिभिर्जितम्[2] ।
बीजं त्रिकं चतुष्कं त्रितयं पञ्चकं चक्षुरेव हि ॥ ५

---

1. ग्रन्थिस्थमलिखेत् ।

2. यथामातृकं लिखितम् । शोधनार्हं भवति ॥ अयं च मन्त्रः प्रकारान्तराऽऽनुपूर्वीकतया जप्यते ।

मृतसञ्जीविनीति मृत्युलाङ्गलमिति च वर्ण्यमानमन्त्रस्य आनुपूर्वी-ऋष्यादिकं च प्रकारान्तरेण दृश्यते अनुष्ठाने — "कहोल ऋषिः । देवी गायत्री छन्दः । मृतसञ्जीविनी रुद्रो देवता ॥ ह्रां ह्रीं ह्रूं इति बीजशक्तिकीलकानि । षड्दीर्घभाजा ह्रामित्यादिना न्यासः ।

ध्यानम् —

स्फुटितनलिनसंस्थं मौलिबद्धेन्दुरेखागलदमृतरसार्द्रं चन्द्रवह्न्यर्कनेत्रम् ।
स्वकरकलितमुद्रापाशवेदाक्षमालं स्फटिकरजतमुक्तागौरमीशं नमामि ॥

त्रिकं च क्रमतो देवि षडङ्गानि प्रविन्यसेत् ।
भूर्जे क्षीरेण विलिखेत् षट्कोणं मण्डलं सुधीः ॥ ६

कर्पूराभां गिरं मुक्ताभूषणै र्भूषितां पराम् ।
ज्ञानमुद्रां चाक्षमालां दधतीं चिन्तयेत्पराम् ॥ ७

एवं ध्यात्वा बाह्यमध्ये पूजयेदुपचारकैः ।
आदावङ्गानि सम्पूज्य षट्कोणेषु प्रपूजयेत् ॥ ८

सञ्जीविनीं तथा बुद्धिपूर्वां सञ्जीविनीं ततः ।
अहङ्कारमयीं तद्वत्सत्वसञ्जीविनीं प्रिये ॥ ९

राजसञ्जीविनीं चैव तत्वसञ्जीविनीं क्रमात् ।
शक्तिबीजेन देवेशि ङेन्नमोऽन्तेन पूजयेत् ॥ १०

वर्णलक्षं जपेन्मन्त्रं पुरश्चरणहेतवे ।
तद्दशांशेन जुहुयात् दूर्वास्त्रिमधुरान्विताः ॥ ११

इति साधारणी पूजा विशेषं शृणु पार्वति ।
इति पूजां पुरा कृत्वा त्वन्यदावरणं शृणु ॥ १२

प्राणापानौ तथा व्यान उदानश्च समानकः ।
अग्रकोणे ततं चैव विततं च तथानघम् ॥ १३

---

लमित्यादिना पञ्चपूजाः — मूलमन्त्रानुपूर्वी —

"ओं जूंसः ईं सौ हंसः सञ्जीविनि सञ्जीविनि नक्षत्रे राशौ जातस्य हृदयग्रन्थिस्थं प्राणं कुरु कुरु सोऽहं सौः ईं (हंसः) सः जूं ओं अमृतयों नमःशिवाय स्वाहा" इति ॥

सुषिरं वैखरीशब्दं द्वितीये कोणके यजेत् ।
पृथिव्यप्तेज आख्यातं वाय्वाकाशौ तृतीयके ॥ १४

शब्दस्पर्शौ च रूपं च रसगन्धौ चतुर्थके ।
इच्छाज्ञाने क्रियां चैव परां मायां च पञ्चमे ॥ १५

भूर्भुवस्वस्तपःसत्यं षष्ठे कोणे क्रमाद्यजेत् ।
सर्वस्यान्ते वदेद्देवि षट्सु सञ्जीविनी पदम् ॥ १६

त्रिशत्सञ्जीविनीपूजा मृत्युञ्जयेति निश्चयात् ॥ १७

इति सञ्जीविनीपूजाविधिः ॥

ईश्वर उवाच —

अथ वक्ष्ये महेशानि मृत्युञ्जयपरां पराम् ।
वदद्वन्द्वं वादिनीति वाङ्मध्ये निक्षिपेत्प्रिये ॥ १८

हस्राङ्कं वाग्भवे देवि क्लिन्ने क्लेदिनि चालिखेत् ।
महाक्षोभं कुरुद्वन्द्वं शिवचन्द्रकलानलान् ॥ १९

वामाक्षीं बिन्दुनादाङ्कां तारबीजं ततो वदेत् ।
मोक्षं कुरुयुगं हस्रं शक्रस्वरविसर्गवत् ॥ २०

इयं सञ्जीविनी देवि ऋषिरस्याः सितः प्रिये ।
गायत्रं छन्द आख्यातं देवतेयं च भैरवी ॥ २१

आदिकूटं भवेद्बीजं मध्यकूटं तु कीलकम् ।
अन्त्यकूटं भवेच्छक्तिः साक्षान्मृत्युविनाशिनी ॥ २२

नवशक्राष्टवर्णैस्तां न्यसेद्वै हृच्छिरःशिखाम् ।
क्रमेणानेन चोच्चार्य पुनरन्त्यत्रयं न्यसेत् ॥ २३

अथ त्रिकोणमालिख्य ततः षट्कोणमालिखेत् ।
बहिरष्टदलं पद्मं चतुरस्रं च संलिखेत् ॥ २४

वसुपत्रे कामपीठं षट्कोणे ज्वालपीठकम् ।
ओड्याणं च त्रिकोणे तु विद्याभागत्रयेण तु ॥ २५

ध्यात्वा चावाहयेदम्बां कदम्बवनमध्यगाम् ।
पुस्तकं वामहस्तेन दक्षिणेनाक्षमालिकाम् ॥ २६

बिभ्रती कुन्दधवलां कुमारीं चिन्तयेत्पराम् ।
सर्वोपचारैः सन्तर्प्य षडङ्गावरणं यजेत् ॥ २७

वसन्तं वदनं चन्द्रं विद्याभागत्रयेण तु ।
त्रिकोणे पूजयेन्मन्त्री प्रादक्षिण्येन चाग्रतः ॥ २८

ब्रह्मविष्णीशशब्दान्ते यजेत्सञ्जीविनीत्रयम् ।
इति सञ्जीविनीषट्कं त्रिकोणे पूजयेत्सुधीः ॥ २९

धर्मार्थकाममोक्षान्ते जयान्ते विजयान्तिके ।
सञ्जीविनीपदं चोक्त्वा षट्कोणेषु च पूजयेत् ॥ ३०

अष्टकान्ते तु मातॄणां कुर्यात्सञ्जीविनीपदम् ।
अनेन विधिना विद्वान् पूजयेद्वसुपत्रके ॥ ३१

नियोज्यं लोकपालान्ते पदं सञ्जीविनीति च ।
त्रयेणानेन देवेशि पूजयेच्चतुरस्रके ॥ ३२

तारबीजं शक्तिबीजं श्रीबीजं चादिमं कुरु ।
इति जप्त्वा महेशानि पुरुषार्थप्रदा भवेत् ॥ ३३

पुनश्चाराधयेद्देवीं गन्धपुष्पादिभिः प्रिये ।
पुरश्चरणरीतिस्तु पूर्वसञ्जीविनीव हि ॥ ३४

इति भैरवीसञ्जीविनीविधिः ॥

परां क्लिन्ने वाग्भवं तु क्लीमात्मकमक्षरम् ।
ततो नित्यमदप्रान्ते द्रवे मायां च संलिखेत् ॥

वज्रेशी रविवर्णेयं ऋषिर्ब्रह्मास्य सन्मनोः ।
छन्दो विराट् च वज्रेशी देवता परिकीर्तिता ॥ ३६

पञ्च पञ्च चतुर्थं च बीजशक्ती क्रमेण तु ।
तार्तीयं कीलकं देव्यास्ततोऽङ्गानि प्रविन्यसेत् ॥ ३७

आद्यन्तबीजं सन्त्यज्य द्विकं चैकं च रूपकम् ।
द्विकं द्विकं द्विकं देवि षडङ्गानि प्रविन्यसेत् ॥ ३८

वृत्तं कृत्वा मनोरम्यं कर्णिकाष्टकशोभितम् ।
कामबीजेन तन्मध्ये महासिंहासनं यजेत् ॥ ३९

रविपत्रैर्विशोभाढ्यं तत्र विद्यां समालिखेत् ।
चतुरस्रं ततः कृत्वा मध्ये पुष्पं विनिक्षिपेत् ॥ ४०

ध्यात्वा चावाहयेद्देवीं कदम्बवनमध्यगाम् ।
मुक्ताचन्द्रकलाचारुमकुटाम्बरभूषणाम् ॥ ४१

शोणिताब्धितटप्रोतमहायन्त्रोपरि स्थिताम् ।
दाडिमीसायकांश्चैव पाशं चैव सृणिं तथा ॥ ४२

चापं कपालं दधतीं शोणमाल्यानुलेपनाम् ।
स्मरेद्रत्नभरां देवीमुपचारैः समर्चयेत् ॥ ४३

आदावङ्गानि सम्पूज्य रविपत्रेषु पूजयेत् ।
हृल्लेखां क्लेदिनीं नन्दां क्षोभिणीं मदनातुराम् ॥ ४४

निरञ्जनां रागवतीं क्लिन्नां च मदनावतीम् ।
खेचरीं द्राविणीं चैव क्रमाद्वेगवतीं यजेत् ॥ ४५

कामबीजेन सम्पूज्या भूबिम्बे लोकपालकाः ।
पुनर्देवीं समभ्यर्च्य वर्णलक्षं जपेच्छुचिः ॥ ४६

तद्दशांशेन जुहुयादम्बुजै रक्तसन्निभैः ॥ ४७

इति वज्रेशीपूजाविधिः ॥



ईश्वर उवाच –

अथ वक्ष्ये महेशानि भैरवीं त्रिपुरां पराम् ।
पञ्चमुण्डासनासीनां मुण्डमालाविभूषणाम् ॥ ४८

आताम्रार्कयुताभासां रक्तभूषणभूषिताम् ।
*पाशाङ्कुशाभयवरां साक्षाद्भुवनमातृकाम् ॥ ४९

हसाद्यं वाग्भवं चाद्यं शिवचन्द्रकला परा ।
त्रिपुरेशी शक्तिबीजं शिवाद्यं भैरवीमनुः ॥ ५०

सर्वमस्या विधानं तु त्रिपुरेशीव विद्धि हि ।
अनया सदृशी विद्या त्रिषु लोकेषु दुर्लभा ॥ ५१

इति भुवनेशीभैरवीपूजाविधिः ॥

---

* पाशाङ्कुशाभयवरकरां भुवनमातृकाम् इति समीचीनः पाठः ॥

ईश्वर उवाच –

एतच्चतुष्टयं देवि चतुरर्णवसागरे ।
वाग्भवं शक्तिबीजं च श्रीबीजं हस(ख्) फानलम् ।। ५२

रुद्रस्वरेण सम्भेद्य बिन्दुनादाङ्कितं हसौः ।
एतत्सम्पुटितां विद्यां द्वात्रिंशार्णां लिखेद्बुधः ।। ५३

नमो भगवति प्रान्ते चतुर्थं प्रणवं लिखेत् ।
ईश्वराख्यं क्रमेणैव कुब्जिकायै पदं ततः ।। ५४

हक्षात्मकं परं पश्चात् धूमात्मकमतः परम् ।
ङ ञणान्ते नमः पश्चात् अघोरमुखि संलिखेत् ।। ५५

छां छीं किणियुगं विच्चे कुब्जिका शाम्भवी परा ।
पश्चिमाम्नायदेवेशी भोगमोक्षप्रदायिनी ।। ५६

महासिंहासनाख्यं तु कथितं यच्चतुष्टयम् ।
अनया विद्यया देवि सम्यक् सम्मानितं सदा ।। ५७

इति श्रीदक्षिणामूर्तिसंहितायां पश्चिमाम्नायसिंहासनविद्याविवरणं नाम
एकादशः पटलः ॥

## ॥ द्वादशः पटलः ॥



ईश्वर उवाच –

उत्तरास्येन देवेशि मयाद्यापि प्रजप्यते ।
महासिंहासनगता भैरवी डामरेश्वरी ॥ १

उत्तराम्नायविद्येशी भोगमोक्षफलप्रदा ।
बन्धूककुसुमावासा पञ्चमुण्डाधिवासिनी ॥ २

स्फुरच्चन्द्रकलारत्नमकुटां मुण्डमालिनीम् ।
त्रिणेत्रां रक्तवसनां पीनोन्नतघनस्तनीम् ॥ ३

पुस्तकं चाक्षमालां च वरदं चाभयं क्रमात् ।
दधतीं संस्मरेन्नित्यमुत्तराम्नायमानिताम् ॥ ४

मदनान्ते फरेमात्ममहामुण्डसमं लिखेत् ।
योगेश्वरी मता या तु विद्येयं कालिका मता ॥ ५

नवाक्षरीं महेशानि स्मरेदुत्तरनायिकाम् ।
अनया विद्यया देवि सम्यक्सम्मानिता भवेत् ॥ ६

न्यासपूजादिकं सर्वं त्रिपुरेशीव सुन्दरि ।
महासम्पत्प्रदा देवि महाभयविनाशिनी ॥ ७

इति श्रीदक्षिणामूर्तिसंहितायां उत्तराम्नायसिंहासनेश्वरी डामरेश्वरीभैरवीविधानं नाम द्वादशः पटलः ॥

## ॥ त्रयोदशः पटलः ॥

ईश्वर उवाच —

चतुःसिंहासनेष्वादौ भैरव्यः परमेश्वरि ।
वाग्भवं सर्वसाम्राज्यदायिन्या मध्यमं लिखेत् ॥ १

दक्षिणाम्नायरुद्राणां सर्वाद्यं च समालिखेत् ।
चैतन्यभैरवीं ध्यायेत्पाशाङ्कुशकपालिनीम् ॥ २

रक्तमुण्डस्रजं चैव पञ्चप्रेतासनस्थिताम् ।
कामेश्वरीं च सम्पूज्य पूर्वसिंहासनाश्रयाम् ॥ ३

इति चैतन्यभैरवीविधिः ॥

ईश्वर उवाच —

उरः क्षमाभादनं जीवः शिव एतत् त्रिधा लिखेत् ।
अर्कतुर्येन्दु कलया क्रमात्तत् पिण्डितं कुरु ॥ ४

बिन्दुनादात्मकं चाद्यं युग्ममन्त्यं विसर्गवत् ।
ध्यानं त्रिभुवनेश्वर्या भैरव्या इव सुन्दरि ॥ ५

षट्कूटभैरवी देवी दक्षिणाम्नायसेविता ।
त्रिकोणं चैव षट्कोणं वसुपत्रं क्षमात्मकम् ॥ ६

ऋष्यादि त्रिपुरेशीवत् पूजा चैव निगद्यते ।
त्रिकोणे क्रमतो देवि रतिं प्रीतिं मनोजवाम् ॥ ७

डाकिनीं शा(सा)किनीं चैव लाकिनीं काकिनीं तथा ।
राकिणीं हाकिनीं चैव षट्कोणेषु यजेत्क्रमात् ॥ ८

अष्टपत्रेषु देवेशि तथाऽनङ्गादिपूजनम् ।
मातरो भैरवैः सार्धं तथा पीठादि भैरवाः ॥ ९

इन्द्रादयश्च सम्पूज्याः दक्षिणाम्नायमानिताः ।

इति षट्कूटभैरवीविधिः ॥

ईश्वर उवाच –

षट्कूटभैरवीवर्णान् संहारक्रमतो लिखेत् ॥ १०

तथा संयोज्य नित्येयं भैरवी भयहारिणी ।
षट्कूटभैरवीवच्च विधानं पूजनादिकम् ॥ ११

पश्चिमाम्नाय सामर्थ्यं गर्वितेयं सुरेश्वरि ।
अनया सदृशी विद्या त्रिषुलोकेषु दुर्लभा ॥ १२

इति नित्यभैरवीविधिः ॥

ईश्वर उवाच —

डामरेश्वरभैरव्याः कादि हित्वा सुपश्वरि ।
बिन्दुनादकलाक्रान्त शक्तिबीजं समुच्चरेत् ॥ १३

भयविध्वंसिनी नाम भैरवी परिकीर्तिता ।
उत्तराम्नायगम्भीरा डामरेशीव पूजयेत् ॥ १४

इति भयविध्वंसिनीभैरवीविधिः ॥

ईश्वर उवाच –

सह(हस) खान्तेफरैमात्मबीजं संलिख्य मन्त्रवित् ।
भयविध्वंसिनी नाम भैरव्या द्वयमालिखेत् ॥ १५

मध्यमं चान्तिमं चैव विद्येयं भोगमोक्षदा ।
अघोरभैरवी देवी श्यामा मुण्डस्रगाकुला ।। १६

दक्षिणोत्तरयोः प्रौढा पञ्चमुण्डाधिवासिनी ।
पुस्तकं चाक्षमालां च पाशं चैवाङ्कुशं तथा ।। १७

खट्वाङ्गं डमरुं चैव कपालं शूलमेव च ।
दधतीं परमेशानीं षट्कूटमिव पूजयेत् ।। १८

इत्यघोरभैरवीविधिः ।।

ईश्वर उवाच —

चतुःसिंहासनसमां श्रीसम्पद्भैरवीं यजेत् ।
भयविध्वंसिनीं नाम भैरवीं पूर्वमालिखेत् ।। १९

आद्ये तृतीये देवेशि वह्निबीजसमासना ।
इयं सम्पत्प्रदा नाम त्रिषु लोकेषु दुर्लभा ।। २०

चतुष्षष्टिमहाकोटियोगिनीशासनक्षमा ।
आताम्रार्कसहस्राभा चन्द्रमण्डलसन्मुखा ।। २१

चन्द्रखण्डस्फुरद्रत्नमकुटा क्षाममध्यमा ।
नितम्बिनी स्फुरद्रक्तवसना रक्तभूषणा ।। २२

पुस्तकं चाभयं वामे दक्षिणेत्वक्षमालिकाम् ।
वरं च दधती पूज्या त्रिपुरेशीव नान्यथा ।। २३

**इति श्रीदक्षिणामूर्तिसंहितायां भैरवीवर्णनं नाम त्रयोदशः पटलः ।।**

---

## ॥ चतुर्दशः पटलः ॥

ईश्वर उवाच —

अथैशानेन वक्त्रेण मयाद्यापि प्रपूज्यते ।
विद्यानां पञ्चकं चैव त्रिषु लोकेषु दुर्लभम् ॥ १

वाग्भवं शिवसंयुक्तं संयुक्तं वाग्भवं शृणु ।
हकलान्ते महेशानि शिवबीजत्रयं लिखेत् ॥ २

रेफवामाक्षिबिन्द्विन्दुघटितं तु तृतीयकम् ।
हसानुग्रहसर्गाढ्यं विद्यैका सुन्दरी प्रिये ॥ ३

अह्लस्वान् योजयेन्मन्त्री रवितुर्यमनुस्वरैः ।
अन्त्यं ससर्गमाद्ये द्वे बिन्दुनादकलात्मके ॥ ४

इयं द्वितीया देवेशि सुन्दरी परिकीर्तिता ।
केवलं वाग्भवं देवि वाग्भवं मध्यमं शृणु ॥ ५

हस एव सहस्रांशु वाग्भवेन च योजयेत् ।
हत्रयं कला हृल्लेखाशक्तिकूटं शृणु प्रिये ॥ ६

चतुष्कं शिवबीजानां रेफानुग्रहसर्गवत् ।
इयं तृतीया देवेशि सुन्दरी चतुरक्षरा ॥ ७

कालान्ते शिवयुग्मं तु तथा जीवत्रयं शिवाम् ।
परयापीडितं कुर्यात् कूटमेतत्त्रिधा प्रिये ॥ ८

वाग्भवे कामराजं च शक्तिबीजे च संलिखेत् ।
चतुर्थी सुन्दरी ख्याता भोगमोक्षप्रदायिनी ॥ ९

जीवः शिवयुगं जीवक्ष्माक्षकारशिवेन्दुमत् ।
एतदाद्यं च मध्यं च शिवेन्द्वाकाशभूषितम् ॥ १०

त्रिपुरेशीमनोरेषा पञ्चमी सुन्दरी भवेत् ।
अन्त्यं तु सहलक्षेन्दु रवीवध्यायेत्पञ्चकमुत्तमम् (?) ११

ऋष्यादिपूजा विज्ञेया त्रिपुरेशीव नान्यथा ॥ १२

॥ इति श्रीदक्षिणामूर्तिसंहितायां पञ्चसुन्दरीभजनं नाम चतुर्दशः पटलः ॥

## ॥ पञ्चदशः पटलः ॥

अथ वक्ष्ये महेशानि विद्याः कल्पलताःप्रिये ।
यस्या विज्ञानमात्रेण पलायन्ते महापदः ॥ १

श्रीविद्या पारिजातेशी पञ्चबाणेश्वरी तथा ।
पञ्चकामेश्वरी देवी कुमारी पञ्चकीर्तिताः ॥ २

सम्पत्प्रदाया भैरव्या वाग्भवं बीजमालिखेत् ।
तारेण परया देवि सम्पुटीकृत्य मन्त्रवित् ॥ ३

सरस्वत्यै हृदन्तोऽयं रुद्रार्णो मनुरीरितः ।
दक्षिणामूर्तिजप्योऽस्य गायत्रं छन्द उच्यते ॥ ४

पारिजातेश्वरी वाणी देवता परिकीर्तिता ।
तृतीयं च द्वितीयं च बीजशक्ती च तारकम् ॥ ५

कीलकं परमेशानि महासारस्वतप्रदा ।
षड्दीर्घस्वरसम्भिन्नबीजेनाङ्गानि विन्यसेत् ॥ ६

वर्णान्विन्यस्य देवेशि ध्यायेत्सारस्वतप्रदाम् ।
हंसारूढां लसन्मुक्ताधवलां शुभ्रवाससम् ॥ ७

शुचिस्मितां चन्द्रमौलिं वज्रमुक्ताविभूषणाम् ।
विद्यां वीणां सुधाकुम्भमक्षमालां च बिभ्रतीम् ॥ ८

एवं ध्यात्वा जपेन्मन्त्रं रविलक्षं समाहितः ।
हुनेत्सहस्रदशकं सितपद्मैः प्रसन्नधीः ॥ ९

अथवा देवदेवेशि जुहुयान्नागचम्पकैः ।
मातृकावल्लिखेद्यन्त्रं पीठं तद्वत् प्रपूजयेत् ॥ १०

तत्र वाणीं समावाह्य पूजयेदुपचारकैः
आदावङ्गानि सम्पूज्य परिवारान् समर्चयेत् ॥ ११

पार्श्वयोर्देवतायास्तु ...... संस्कृतां यजेत् ।
प्रज्ञा मेधा श्रुतिः शक्तिः स्मृतिर्वागीश्वरीति च ॥ १२

सुमतिः स्वस्तिरित्येताः वसुपत्रेषु पूजयेत् ।
मातरस्तु दलाग्रेषु सम्पूज्याः परमेश्वरि ॥ १३

इन्द्रादयश्च भूबिम्बे पुनर्देवीं समर्चयेत् ।
पारिजातेश्वरी विद्या दुर्लभा भुवनत्रये ॥ १४

इति पारिजातेश्वरीवाणीयजनविधिः ॥

ईश्वर उवाच —

अथ वक्ष्ये महेशानि पञ्चबाणेश्वरीं शिवाम् ॥ १५

त्रिपुरेशीतन्त्रमध्ये बाणाः प्रोक्ता महेश्वरि ।
तैरेव पञ्चभिर्बाणैर्विद्यापञ्चाक्षरी भवेत् ॥ १६

ऋषिरस्यास्तु मदनो गायत्रं छन्द उच्यते ।
कामेश्वरीव बीजादि देवता चेयमीश्वरी ॥ १७

व्यस्तैः समस्तैरङ्गानि बाणैःपञ्चभिराचरेत् ।
पूर्ववत् पञ्चबाणानां न्यासं कुर्याद्विचक्षणः ॥ १८

पञ्चकामांश्च विन्यसेत् पूर्ववत्परमेश्वरि ।
उद्यद्दिवाकराभासां नानालङ्कारभूषिताम् ॥ १९

बन्धूककुसुमाकाररक्तवस्त्राङ्गरागिणीम् ।
इक्षुकोदण्डपुष्पेषुविराजि भुजद्वयाम् ॥ २०

एवं ध्यात्वा जपेन्मन्त्रं वर्णलक्षं समाहितः ।
तद्दशांशेन जुहुयात् बन्धूककुसुमैः शिवे ॥ २१

कामेश्वरीव सम्पूज्या विशेषो बाणपूजनम् ।
त्रिपुरेशीव सम्पूज्य मोहयेज्जगतीमिमाम् ॥ २२

**इति पञ्चबाणेश्वरीयजनविधिः ॥**

ईश्वर उवाच —

अथ वक्ष्ये पञ्चकामनायिकां विश्वमातरम् ॥ २३

पूर्वोक्तपञ्चकामैस्तु पञ्चकामेश्वरी भवेत् ।
ऋषिः सम्मोहनो नाम गायत्रं छन्द उच्यते ॥ २४

द्वितीयं काममाद्यं च बीजशक्ती च कीलकम् ।
अन्यत्र सन्न्यसेन्मन्त्री व्यस्तैश्चैव समस्तकैः ॥ २५

अङ्गानि पूर्ववत् कामबाणन्यासद्वयं यजेत् ।
रक्तां रक्तदुकूलाङ्गलेपनां रक्तभूषणाम् ॥ २६

पाशाङ्कुशधनुर्बाणान् पुस्तकं चाक्षमालिकाम् ।
वराभीती च दधतीं त्रैलोक्यवशकारिणीम् ॥ २७

अन्यत्सर्वं पूजनादि पञ्चबाणेश्वरीव तु ॥
पञ्चकामैः परिवृता विशेषोऽयं निगद्यते ॥ २८

इति पञ्चकामेश्वरीयजनविधिः ॥

ईश्वर उवाच –

अथ वक्ष्ये महेशानि कुमारीं विश्वमातरम् ॥ २९

कामेश्वरीं भगवतीं त्रैलोक्याकर्षणक्षमाम् ।
वाग्भवं त्रिपुरेशान्या हित्वा तत् सङ्क्षिपेत्सुधीः ॥ ३०

कामशक्तिद्वयान्तस्थविद्येयं त्र्यक्षरी भवेत् ॥
त्रिपुरेशीव ऋष्यादि बीजशक्तिक्रमेण च ॥ ३१

आद्यन्ते कीलकं मध्ये महावश्यकरी प्रिये ।
द्विरावृत्या षडङ्गानि पञ्चबाणान् प्रविन्न्यसेत् ॥ ३२

पञ्चकामांश्च विन्यस्य मूलेन व्यापकं न्यसेत् ।
कामेश्वरीमहायन्त्रमध्ये देवीं प्रपूजयेत् ॥ ३३

विशेषं शृणु तत्रैव बाणस्थानेषु पार्वति ।
पञ्चकामान् प्रपूज्याथ रत्यादित्रितयं यजेत् ॥ ३४

ततोऽनङ्गाद्यष्टकं स्याद्भैरवैः सह मातरः ।
अष्टपत्रेषु चाग्रेषु यजेत्पीठाष्टकं प्रिये ॥ ३५

इन्द्रादयश्च सम्पूज्या मध्ये देवीं समर्चयेत् ।
पुरश्चरणकृत्यं तु त्रिपुरेशींव सुन्दरि ॥ ३६

एतां स्मरन् महेशानि मोहयेज्जगतीमिमाम् ।
उद्यत्सूर्यसहस्राभां माणिक्यवरभूषणाम् ॥ ३७

स्फुरद्रत्नदुकूलाढ्यां नानालङ्कारभूषिताम् ।
इक्षुकोदण्डबाणांश्च पुस्तकं चाक्षमालिकाम् ॥ ३८

दधतीं चिन्तयेन्नित्यं सर्वरागवशङ्करीम् ॥ ३९

इति श्रीकुमारीयजनविधिः ॥

॥ इति श्रीदक्षिणामूर्तिसंहितायां कल्पलताविवरणं नाम पञ्चदशः पटलः ॥

## ॥ षोडशः पटलः ॥



देव्युवाच —

पञ्चरत्नमहाविद्याः सूचिता न प्रकाशिताः ।
श्रोतुमिच्छामि देवेश कृपां कुरु महेश्वर ॥ १

ईश्वर उवाच —

सिद्धविद्यां प्रवक्ष्यामि स्मरणेनापि सिद्धिदाम् ।
कामदामन्नदां नित्यं सर्वैश्वर्यप्रदां प्रिये ॥ २

शिवाग्निवामनयन बिन्दुनादकलात्मकम् ।
श्रीकामयुगलं चोक्त्वा हृदन्ते भगवत्यपि ॥ ३

* माहेश्वरी चतुर्वर्णमन्नपूर्णे ततो लिखेत् ।
चतुर्वर्णं वह्निजाया ताराद्यो मनुरीरितः ॥ ४

विंशद्वर्णो महेशानि प्रातरेव समर्चयेत् ।
अस्याः स्मरणमात्रेण पलायन्ते महापदः ॥ ५

ऋषिर्ब्रह्मास्य मन्त्रस्य य[अ]ष्टिश्छन्दोऽभिधीयते ।
अन्नपूर्णेश्वरी सिद्धविद्येयं देवता प्रिये ॥ ६

बीजं शक्तिः कीलकं च हृल्लेखात्रिकमुच्यते ।
षड्दीर्घस्वरसम्भिन्नां हृल्लेखां कुरु पार्वती ॥ ७

एभिरङ्गानि विन्यस्य वर्णन्यासं समाचरेत् ।
ब्रह्मरन्ध्रे च सीमन्ते भालभ्रूमध्ययोरपि ॥ ८

---

* ओं ह्रीं श्रीं क्लीं नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा इति विंशत्यक्षरो मनुः ॥

वक्त्रे कण्ठे च हृदये कुक्षिनाभिषु लिङ्गके ।
आधारे स्फिग्द्वये चोरुद्वये जानुद्वये तथा ॥ ९

पादयोर्देवदेवेशि पदन्यासं ततो यजेत् ।
नवद्वारेषु देवेशि पदन्यास उदाहृतः ॥ १०

मूलेन व्यापकन्यासं कुर्याद्देहस्य शुद्धये ।
अथ यन्त्रं प्रवक्ष्यामि भोगमोक्षफलप्रदम् ॥ ११

त्रिकोणं षोडशारं च ततोऽष्टदलनीरजम् ।
भूबिम्बं परमेशानि तारं मध्ये विनिक्षिपेत् ॥ १२

कोणत्रये त्रिबीजानि प्रादक्षिण्येन योजयेत् ।
अग्रमारभ्य पूर्वादि कलापत्रे शृणु प्रिये ॥ १३

अवशिष्टान् कलावर्णान् पूर्वादिक्रमतो लिखेत् ।
अष्टपत्राष्टपत्रेषु लिखेद्दीर्घस्वरं प्रिये ॥ १४

एतत्पीठं समभ्यर्च्य प्रणवेन त्रिधा बुधः ।
तत्रावाह्यान्नदां देवीं मुद्राः साधारणा यजेत् ॥ १५

गन्धपुष्पादिभिः सम्यक् अभ्यर्च्य परितो यजेत् ।
अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ॥ १६

ध्यात्वा देवीं सिद्धविद्यां महाक्षीरार्णवे बुधः ।
रत्नद्वीपे लसत्स्वर्णप्राकारभवनोज्ज्वले ॥ १७

कल्पद्रुमविशोभाढ्ये सिंहासनसमन्विते ।
उद्यत्सूर्यसमाभासां विचित्रवसनोज्ज्वलाम् ॥ १८

चन्द्रचूडामन्नदाननिरतां रत्नभूषिताम् ।
सुवर्णकलशाकारस्तनभारभरोन्नताम् ॥ १९

रुद्रताण्डवसानन्दां द्विभुजां परमेश्वरीम् ।
पुरस्तात्ताण्डवप्रौढं रुद्रं सम्पूजयेत्प्रिये ॥ २०

द्वितीयेन च बीजेन तृतीयेन हरिं यजेत् ।
ब्रह्माणीं तुर्यबीजेन कलापत्रं ततो यजेत् ॥ २१

आदावन्नप्रदा मोक्षदायिनी भयहारिणी ।
गतिहंसी वराक्षी च तीर्थरूपा ततः परम् ॥ २२

मानदा हेमदा स्वर्णदात्री रिपुनिकृन्तनी ।
अनर्थध्वंसिनी देवी नयनानन्ददायिनी ॥ २३

पूतमूर्तिर्भयघ्नी च स्वामिनी हरसुन्दरी ।
षोडशान्तेऽन्नपूर्णायै नमस्कारक्रमेण तु ॥ २४

वर्णदेवीः समभ्यर्च्य वसुपत्रं ततो यजेत् ।
ब्राह्म्याष्टकेन देवेशि चतुरस्रं ततो यजेत् ॥ २५

लोकपालैः पुनर्देवीं गन्धपुष्पादिभिर्यजेत् ।
लक्षं जपेत्सुनियमो दशांशेन तु होमयेत् ॥ २६

रम्यपायससर्पिर्भ्यां सिद्धिदा भवति ध्रुवम् ।
इति ते कथिता सिद्धविधान्नफलदायिनी ॥ २७

इति श्रीदक्षिणामूर्तिसंहितायां अन्नपूर्णायजनं नाम षोडशः पटलः ॥

## ॥ सप्तदशः पटलः ॥

ईश्वर उवाच —

अथातः सम्प्रवक्ष्यामि मातङ्गीं रत्नदेवताम् ।
वाग्भवं कामराजं च सर्गवान् भृगुरुत्तमे ॥ १

अनुग्रहेण संयुक्तः पुनराद्यं परां लिखेत् ।
श्रीबीजं तारकं चैव नमो भगवतीति च ॥ २

मातङ्गेश्वरी सर्वान्ते मनोहारि जनादिकम् ।
सर्वराजवशं चान्तेकरि सर्वमुखान्तिके ॥ ३

रञ्जनीति ततः सर्वस्त्रीशब्दं ज ततो वदेत् ।
पुरुषान्ते ततः प्रोक्त्वा वशान्ते सर्वदुष्ट च ॥ ४

मृगान्ते वशमालिख्य सर्वलोकपदं बदेत् ।
[1]कार्यादि वशमालिख्य करिशब्दं ततो लिखेत् ॥ ५

परां श्रियं कामबीजं वाग्भवं च ततो लिखेत् ।
सप्ततिश्च त्रयो वर्णा मातङ्गीविग्रहाः प्रिये ॥ ६

इयं [2]मातङ्गविद्यानां राज्ञी [3]मोक्षार्थसिद्धिदा ।
ऋषिर्मतङ्गो भगवान् गायत्रं छन्द उच्यते ॥ ७

---

1. वशङ्करिपदंचोक्त्वा वह्निजायां ततोलिखेत् ।

2. इयं मातङ्गिनी विद्याराज्ञी ॥

3. मन्त्रस्यास्य आनुपूर्वीविषये विप्रतिपत्तिः वर्तते । ग्रन्थान्तरेषु तन्त्रान्तरेषु च प्रकारान्तरेण प्रतिपादितत्वात् ॥ त्रिसप्ततिवर्णात्मकतयात्र प्रतिपाद्यमानस्य मन्त्रस्वरूपस्य अन्यत्र दृश्यमानस्य मन्त्रस्वरूपस्य च भूयान् भेदः दृश्यते इत्यतो गुरूपदिष्ट क्रम एव अवलम्बनीयः ॥

देवता नादमूर्तिस्तु मातङ्गी परमेश्वरी ।
कामबीजं वाग्भवं च बीजशक्ती च कीलकम् ॥ ८

तार्तीयं देवदेवेशि षडङ्गान्यथ विन्यसेत् ।
आद्यबीजत्रयेणैव द्विरावृत्त्या षडङ्गकम् ॥ ९

अम्भोजार्पितदक्षाङ्घ्रिक्षोमां ध्यायेन्मतङ्गिनीम् ।
क्वणद्वीणालसन्नादश्लाघ्यान्दोलितकुण्डलाम् ॥ १०

दन्तपत्रप्रभारम्यां शिवां सर्वाङ्गसुन्दरीम् ।
कादम्बमुण्डदामाढ्यां वेणुवादनतत्पराम् ॥ ११

श्यामाङ्गीं शङ्खवलयां ध्यायेत् सर्वार्थसिद्धये ।
अथ यन्त्रं प्रवक्ष्यामि त्रिकोणं पञ्चकोणकम् ॥ १२

वसुपत्रं कलापत्रं वसुपत्रं चतुर्दलम् ।
चतुरस्रं चतुर्द्वारमेवं मण्डलमालिखेत् ॥ १३

आवाह्य देवतां सम्यक् उपचारैः समर्च्य तु ।
अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ॥ १४

---

एतद्रीत्या – ऐं क्लीं सौः ऐं ह्रीं श्रीं ओं नमो भगवति मातङ्गेश्वरि सर्वजनमनोहारि, सर्वराजवशंकरि, सर्वमुखरञ्जनि, सर्वस्त्रीपुरुषवशंकरि, सर्वदुष्टमृगवशंकरि, सर्वलोकवशंकरि ह्रीं श्रीं क्लीं ऐं इति । नित्योत्सवादिषु तु – ऐं ह्रीं श्रीं ऐं क्लीं सौः ओं नमो भगवति श्रीमातङ्गेश्वरि सर्वजनमनोहारि सर्वमुखरञ्जिनि क्लीं ह्रीं श्रीं सर्वराजवशंकरि सर्वस्त्रीपुरुषवशंकरी सर्वदुष्टमृगवशंकरि सर्वसत्ववशंकरि सर्वलोकवशंकरि अमुकं (सर्वजनं) मे वशमानय स्वाहा सौः क्लीं ऐं श्रीं ह्रीं ऐं ॥ इति भवति । गुरुमुखादुपदेशः स्वीकार्यः ॥

अथ वक्ष्ये महेशानि चतुरस्रस्य पूजनम् ।
अग्रद्वारि चतुर्दिक्षु प्रादक्षिण्येन पूजयेत् ।। १५

सरस्वतीं च लक्ष्मीं च शङ्खपद्मनिधी प्रिये ।
विदिक्षु वामभागादि प्रादक्षिण्येन पूजयेत् ।। १६

वटुकं गणराजं च क्षेत्रपालं च योगिनीः ।
ततश्चतुर्दलाग्रादि सिद्धमातङ्गिनीं क्रमात् ।। १७

महालक्ष्मीमयीं सिद्धलक्ष्मीं मातङ्गिनीं यजेत् ।
महामातङ्गिनीं देवि प्रादक्षिण्येन पूजयेत् ।। १८

अष्टपत्रे महेशानि त्वसिताङ्गादिभैरवाः ।
असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तभैरवः ।। १९

कपाली भीषणश्चैव संहारश्चाष्ट भैरवाः ।
प्रादक्षिण्येन देवेशि पुर आरभ्य पूजयेत् ।। २०

वामा ज्येष्ठा च रौद्री च शान्तिः श्रद्धा च पञ्चभिः ।
वागीश्वरी क्रियाशक्तिर्लक्ष्मीः पुष्टिस्तथैव च ।। २१

मोहिनी प्रथमाम्बीनि द्वितीया विन्दु (?) ।
सुरानन्दा नागबुद्धिरेताः षोडश कीर्तिताः ।। २२

पुर आभ्य देवेशि प्रादक्षिण्येन पूजयेत् ।
षोडशारे ततो देवि लक्ष्मीश्चैव सरस्वती ।। २३

रतिः प्रीतिः कीर्तिशान्तिः पुष्टिस्तुष्टिश्च पूर्ववत् ।
पत्रान्तरेण देवेशि मातृणां चाष्टकं यजेत् ।। २४

पूर्ववत्पञ्चपत्रेषु द्राविणी शोषिणी तथा ।
स्तम्भिनी मोहिनी चैव तथाचाकर्षकारिणी ।। २५

त्रिकोणेऽपि हि देवेशि यजेदग्रेऽपि पूर्ववत् ।
प्रादक्षिण्येन मनुविद् र् [illegible]ीतिमनोभवा: ॥ २६

पुन: सम्पूज्य देवेशि सर्वोपस्कारकै: प्रिये ।
पुरश्चरणकाले तु लक्षत्रयमुदाहृतम् ॥ २७

प्रवालमालया देवि तद्दशांशेन होमयेत् ।
मधूककुसुमैर्मन्त्री त्रिकोणकुण्डके शुचि: ॥ २८

एवं संसिद्धमन्त्रस्तु सर्वकर्माणि साधयेत् ।
राज्यार्थी मल्लिकाजातिपुन्नागै: श्रीफलच्छदै: ॥ २९

श्रीकामुक: शुभ्रपद्मै: पङ्कजैर्वापि सुव्रते ।
उत्पलैर्भोगकामस्तु लक्ष्मीपुष्पैश्च सुव्रते ॥ ३०

जपाबन्धूकवकुलकिंशुकैर्वश्यकारिणी ।
वश्यार्थी मधुसंयुक्तैर्मधूकसुमैर्हुनेत् ॥ ३१

आकर्षणे तु लवणतिलैस्त्रिमधुसंयुतै: ।
वञ्जुलैर्वृष्टिकामस्तु खर्जूरैश्च गलूचिभि: ॥ ३२

आयुष्कामस्तु दूर्वाभि:र्धनार्थी हेमपुष्पकै: ।
वश्ये कदम्बकुसुमैर्धान्यार्थी धान्यतण्डुलै: ॥ ३३

साज्यान्नै रत्नकामस्तु वश्ये कुङ्कुमरोचनै: ।
गन्धद्रव्यैस्तु सौभाग्ये नन्द्यावर्तैस्तु वाङ्मये ॥ ३४

कर(ञ्ज)पुष्पै: सम्पदर्थे पालाशैस्तेजसे हुनेत् ।
कापिलेन घृतेनाथ तेज: श्रीहवनाद्भवेत् ॥ ३५

उन्मादनकरो होमं उन्मत्तकुसुमैर्भवेत् ।
विषवृक्षैश्च निम्बैश्च श्लेष्मातकविभीतकैः ॥ ३६

उलूकगृध्रकाकैस्तु निम्बतैलपरिप्लुतैः ।
होमयेद्रिपुनाशाय नवास्त्रे वह्निकुण्डले(के) ॥ ३७

यमाशाभिमुखो नग्नो भूत्वा वृषमलीमसः ।
उच्चाटनं वायुभागे विद्वेषो राक्षसे भवेत् ॥ ३८

इन्द्राग्नेयविभागेऽपि शान्तिके प्राङ्मुखो यजेत् ।
पश्चिमे स्तम्भनं चोक्तं उत्तरस्यां तु देशिकः ॥ ३९

साधयेत्सर्वकर्माणि पौष्टिकादीनि साधकः ।
पायसैर्गुडखण्डैश्च *कुसीदेक्षुरसैरपि ॥ ४०

पित्तशान्ति करो(रे) होमः(मे)स्तन्यं केवलमेव वा ।
उन्मादनाशनं चूर्णपायसं घृतसंयुतम् ॥ ४१

मरीचितिलतैलाक्तं श्वासकासहरं भवेत् ।
निर्गुण्डीमूलहोमेन वातदोषविनाशनम् ॥ ४२

शृणवथाकर्षणं शीघ्रमाकृतित्रितयं कुरु ।
जीवन्यासं ततः कृत्वा मृदा चक्र(क्रि) गृहे तथा ॥ ४३

मधूच्छिष्टेन चर्चापि लवणेनापि पुत्रिकाम् ।
कृत्वा तन्नामसङ्कल्प्य मुद्रया कुण्डके न्यसेत् ॥ ४४

......मधः कृत्वा सा वाणी मेखलान्तिता । (?)
लम्बयेदूर्ध्वतः पश्चाद्वृक्षमाक्षिकसम्भवाम् ॥ ४५

---

* कुसीद — Red Sandalwood.

लवणं पेष्य मधुना लावण्यं होमयेत्सुधीः ।
आरभ्य दक्षिणं पादं वामपादावधि प्रिये ॥ ४६

मनुजानामयं होमः स्त्रीणां देवि बिषर्ययः ।
सप्तरात्रान्महादेवि क्षुभ्यन्ति विरहातुराः ॥ ४७

पतन्ति साधकस्याङ्के भयलज्जाविवर्जिताः ।
लवणं निम्बतैलेन होमयेच्छत्रुनाशने ॥ ४८

हरिद्राचूर्णसंयुक्तं लवणं स्तम्भने हुनेत् ।
पूर्वाह्णे पूर्वरात्रे च शुभार्थं च यजेद्बुधः ॥ ४९

मध्याह्ने मध्यरात्रे च कुर्यादुच्चाटनादिकम् ।
मातङ्गीविग्रहो भूत्वा सर्वकर्माणि साधयेत् ॥ ५०

आवेशनं ततः कुर्यात्कन्यानां सन्निधौ सुधीः ।
कन्यापूजा च कर्तव्या योगिनीनां विशेषतः ॥ ५१

अष्टाष्टकं समभ्यर्च्य मातङ्गीतुष्टिकृत्सुधीः ।
बलिं निवेदयेत्पश्चात् मातङ्ग्यास्तु वरानने ॥ ५२

देवीशक्ति नमश्चान्ते भगवत्यपि संलिखेत् ।
आनयेति च संयुक्तं द्विठान्तो मनुरुच्यते ॥ ५३

अनेन बलिदानं स्यान्मातङ्ग्याः सिद्धिहेतवे ।
वटुकादिबलींस्तद्वत् सम्यगुत्क्षिप्य मान्त्रिकम् ॥ ५४

साधयेत्सर्वकर्माणि मातङ्ग्यास्तु प्रसादतः । ५५

इति श्रीदक्षिणामूर्तिसंहितायां मातङ्गीश्वरीरत्नयजनं नाम सप्तदशः पटलः ॥

## ॥ अष्टादशः पटलः ॥

ईश्वर उवाच –

शृणु देवि प्रवक्ष्यामि *भुवनानन्दमन्दिरम् ।
यस्या विज्ञानमात्रेण पलायन्ते महापदः ॥ १

शिवं वह्निसमारूढं वामाक्षीपरिभूषितम् ।
बिन्दुनादकलाक्रान्तं विद्येयं भुवनेश्वरी ॥ २

ऋषिःशक्तिः वसिष्ठस्य सुतश्छन्दोऽत्र कथ्यते ।
गायत्रं देवता बोधमयी सच्चित्कला परा ॥ ३

हचतुर्थे बीजशक्ती कीलकं रेफ उच्यते ।
तदादि (नियोगो) भुवनेशानि पुरुषार्थचतुष्टये ॥ ४

अनन्तवामनेत्राभ्यां वामश्रुत्यापरेण च ।
अनुग्रहविसर्गाभ्यां विद्यां सम्भेद्य मन्त्रवित् ॥ ५

षडङ्गानि च विन्यस्य हृल्लेखादिमनुं न्यसेत् ।
क्षकाराद्यर्णपर्यन्तां विपरीतक्रमेण च ॥ ६

मातृकां संहरंस्तद्वद्वर्गं वर्गं विलोमतः ।
गुरूपदेशविधिना विलोमस्वरमार्गतः ॥ ७

संहारमातृकान्यासो ब्रह्मानन्दरसोज्ज्वलः ।
एवं भूत्वा ततो मन्त्री षडङ्गैरङ्गुलीर्न्यसेत् ॥ ८

---

* अत्र भुवनेश्वरीमन्त्रस्य विधानं उपदिश्यते ।

पुनरङ्गानि विन्यस्य चिदानन्देन तेजसा ।
कास्यहृद्गुह्यपादेषु न्यसेत्पश्च पुरेश्वरि ॥ ९

हृल्लेखां गगनां रक्तां चतुर्थीं च करालिकाम् ।
महोच्छुष्मां प्रविन्यस्य तिस्रःशक्तीश्च विन्यसेत् ॥ १०

गायत्रीं चैव सावित्रीं तृतीयां च सरस्वतीम् ।
कण्ठे वामस्तने दक्षस्तने देवत्रयं ततः ॥ ११

ब्रह्मविष्णुशिवाख्यं च वामांसे हृदये तथा ।
दक्षांसे च तथा न्यासं मातॄणां विन्यसेत्प्रिये ॥ १२

ललाटेऽम्से वामभागे पार्श्वे कुक्षौ च दक्षिणे ।
कुक्षौ पार्श्वेऽम्सके स्वान्ते मूलेन व्यापकं न्यसेत् ॥ १३

पाशाङ्कुशवराभीतिमुद्रासन्नद्धविग्रहः ।
कुङ्कुमादिभिरत्युच्चैः सुद्रव्यैर्विलिखेत्पदे ॥ १४

सुवर्णरौप्यताम्रादिरचितैर्देशिकोत्तमः ।
इन्द्रराक्षसवायव्यरेखाभिर्वह्निमण्डलम् ॥ १५

तन्मध्ये साध्यनामाङ्कं शक्तिं संलिख्य मान्त्रिकः ।
ठकारवेष्टितं कृत्वा कोणाग्रेषु परां लिखेत् ॥ १६

तद्बीजत्रयरेफाग्रं प्रादक्षिण्येन वेष्टयेत् ।
अन्योन्यकलया रम्यशक्तिबन्ध उदाहृतः ॥ १७

त्रिकोणस्यान्तरालेषु वामनेत्रं सबिन्दुकम् ।
प्रत्येककोणपार्श्वेषु हर्यर्णं च हराक्षरम् ॥ १८

पुनरेतद्द्वयं मध्ये तुर्यं च सविसर्गकम् ।
इत्यर्णं वेष्टयेद्बाह्ये वृत्तं कृत्वा बहिस्ततः ॥ १९

पद्मं विरच्य वस्वग्रं केसरस्थानके पुनः ।
हर्यर्णं च हरार्णं च लिखेत्प्रतिदलं सुधीः ॥ २०

तुर्यस्वरं हरिं तुर्यं हर इत्यपि संलिखेत् ।
दलेषु च दलाग्रेषु वामनेत्रं च संलिखेत् ॥ २१

एतत्त्रिगुणितं* यन्त्रं बही राश्यर्णवेष्टितम् ।
कामदं मोक्षदं रम्यं सर्वैश्वर्यप्रवर्तकम् ॥ २२

अस्मिन् सम्पूजयेत्पीठशक्तीः सर्वार्थसिद्धये ।
जयां च विजयां चैवाप्यजितां चापराजिताम् ॥ २३

नित्यां विलासिनीं दोग्ध्रीमघोरां सर्वमङ्गलाम् ।
अभ्यर्च्य परितः पीठं नन्दिनं पीठमूलगम् ॥ २४

ध्यात्वा कुण्डलिनीरूपां उद्यद्भास्वत्समद्युतिम् ।
पाशाङ्कुशवराभीतिचतुर्बाहुं त्रिलोचनाम् ॥ २५

ध्यात्वाऽऽवाह्य यजेद्देवीमुपचारैर्मनोहरैः ।
आवाहन्यादिमुद्राश्च दर्शयेद्देशिकोत्तमः ॥ २६

अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ।
पूजयेद्देशकवरो भोगाङ्गं भोगसिद्धये ॥ २७

---

* एतत्त्रिगुणितमन्त्रयन्त्रोल्लेखनक्रमः प्रपञ्चसारसारसङ्ग्रहे विशदतया प्रपञ्चितः द्रष्टव्यः ॥ पूजाविधिश्च ॥

उ ऊ ओ गजडावर्णा दबला स श्च पार्थिवाः ।
ऋ ॠ औ घ झ ढा वर्णा ध भ वा ळ श्च नीरजाः । २८

इ ई ऐ ख छ ठा थ श्च फ र षा वह्निसम्भवाः ।
अ आ ए क च टा वर्णा त प या श श्च वायुजाः ॥ २९

लृ लॄ अं ङ ञ णा न श्च म ळ क्षा नाभसा मताः ।
ऊर्ध्वे द्वे याम्यसौम्यादिविदिक्षु परिपूजयेत् ॥ ३०

वर्णान् समाहितो मन्त्री हृल्लेखाद्यं ततःपरम् ।
पञ्चकं पूजयेत्तेषु स्थानेषु निजसिद्धये ॥ ३१

ऐन्द्रनैर्ऋतवायव्यकोणेषु क्रमतो यजेत् ।
गायत्र्यादित्रयं पश्चात् ब्रह्मादित्रयमर्चयेत् ॥ ३२

आग्नेयवारुणेशानदिक्षु पूज्यास्ततः परम् ।
दलेषु मातरः पूज्या लोकपालार्चनं ततः ॥ ३३

इति श्रीभुवनेश्वरीत्रिगुणितयन्त्रोद्धारः ॥

**ईश्वर उवाच –**

अथातः सम्प्रवक्ष्यामि यन्त्रं *षड्गुणितं प्रिये ।
यस्य विज्ञानमात्रेण सर्वसिद्धीश्वरो भवेत् ॥ ३४

पुटितं वह्निमालिख्य मध्ये शक्तिं नियोजयेत् ।
तच्छक्तिरेफभागे तु साध्यनामाक्षरं लिखेत् ॥ ३५

---

* षड्गुणितयन्त्रक्रमश्च प्रपञ्चसारसारसङ्ग्रहे प्रथमभागे भुवनेशीविधाने प्रपञ्चितः द्रष्टव्यः ।

तत्तुर्यस्वरभागे तु साधकस्य वशं कुरु ।
साध्यस्योपरि संस्पष्टं विलिखेत्सर्वसिद्धये ॥ ३६

ठकारवेष्टितं कृत्वा बहिः शक्तिं च पञ्चधा ।
विलिख्य तद्बहिस्तद्वत् श्रीबीजं कामबीजकम् ॥ ३७

पङ्क्तिशः पञ्चधाऽऽलिख्य ततः षट्कोणसाधनम् ।
षट्कोणकोणषट्केऽपि वामनेत्रं सबिन्दुकम् ॥ ३८

षट्कोणसन्धिषु पुनःशक्तिबीजं समालिखेत् ।
पूर्ववच्छक्तिबन्धस्तु कार्यः संस्पर्शवर्जितः ॥ ३९

ऊर्ध्वकोणत्रयस्यान्तरालेषु विलिखेद्बुधः ।
साधकस्य सबिन्दूनि नामवर्णान्यतः परम् ॥ ४०

शक्तिश्रीकामबीजानि लिखेत्तत्रैव देशिकः ।
ततः कोणत्रयस्याथ त्वन्तरालेषु मन्त्रवित् ॥ ४१

साध्याक्षराणि शक्तिश्रीकामबीजानि च क्रमात् ।
सविसर्गाणि संलिख्य विदर्भ्य गुरुसेवकः ॥ ४२

कोणपार्श्वेषु सर्वत्र हरिवर्णहराक्षरैः ।
विलिख्य च ततो बाह्यवृत्तं पूर्णेन्दुवत्कुरु ॥ ४३

अनुलोमेन तद्वृत्तमध्ये पञ्चाशदक्षराः ।
तद्वृत्तबाह्यतस्तद्वत् विलोमेन च मातृकाः ॥ ४४

विज्ञेया वेष्टने देवि ततो भूयुगलं लिखेत् ।
सम्पुटत्वेन देवेशि वसुकोणं ततो भवेत् ॥ ४५

महादिक्षु नृसिह्मस्य बीजमन्त्रं समालिखेत् ।
क्षौ(क्ष्रौ)मात्मकं नृसिह्मस्य बीजं जानीहि पार्वति ॥ ४६

अक्षमाग्निपदा देवि मनुस्वरविभूषिताः ।
बिन्दुनादकलाक्रान्तो ह्ययं चिन्तामणिःप्रिये ॥ ४७

कोणेषु विलिखेन्मन्त्री ततस्तत्कोणसन्धिषु ।
विलिख्य शूलान् प्रणवैस्ततः पद्मं समालिखेत् ॥ ४८

दलैर्द्वादशभी रम्यं राश्यर्णपरिजृम्भितम् ।
एतत्षठ्गुणितं यन्त्रं सर्वैश्वर्यप्रवर्तकम् ॥ ४९

तत्र पीठं समभ्यर्च्य समावाह्य च पूर्ववत् ।
उपचारैर्गन्धपुष्पैर्धूपदीपमनोभवैः ॥ ५०

आवाहन्यादिमुद्राश्च दर्शयित्वार्चनं यजेत् ।
षट्कोणाग्नेयनैरृत्यवायुमध्ये च दिक्षु च ॥ ५१

षडङ्गावरणं कुर्यात् द्वितीयावरणं ततः ।
ब्रह्मणा सह गायत्रीं सावित्रीं विष्णुना सह ॥ ५२

सरस्वतीं शिवेनैव धनदेन श्रियं तथा ।
मदनेन रतिं पुष्टिं गणपेन समर्चयेत् ॥ ५३

षट्कोणपूर्वकोणादिप्रादक्षिण्येन पूजयेत् ।
रक्ताऽनङ्गादिकुसुमा तृतीया कुसुमातुरा ॥ ५४

नित्याऽनङ्गादिमदना षष्ठी च मदनातुरा ।
गौरी च गगना चैव तथा गगनवेगिनी (रेखिका) ॥ ५५

पद्मा भयप्रमथनी तथा च शशिशेखरा ।
एता द्वादशपत्रेषु पूर्वादिक्रमतो यजेत् ॥ ५६

चतुर्दलानि सन्त्यज्य दिक्षु ब्राह्म्यादिका यजेत् ।
भूगृहे लोकपालांश्च एतत् षड्गुणितं प्रिये ॥ ५७

वागादिसिद्धयः सर्वा जायन्ते साधकस्य तु ।
पुनराराध्य नैवेद्यमुखैराराधनैः पराम् ॥ ५८

इति भुवनेश्वरीषड्गुणितयन्त्रोद्धारः ॥

ईश्वर उवाच —

अथार्कगुणितं वक्ष्ये यन्त्रं सर्वोत्तमोत्तमम् ॥ ५९

यस्य विज्ञानमात्रेण भुवनाधीश्वरो भवेत् ।
षट्कोणं पूर्वमुद्धृत्य त्वन्यत्तत्सन्धिभेदतः ॥ ६०

षट्कोणान्तरमुत्पाद्य भवेद्द्वादशकोणकम्* ।
तन्मध्ये शक्तिमालिख्य पूर्वोक्तेन विधानतः ॥ ६१

ठकारमध्ये तद्बाह्ये वेष्टयेत्प्रबलो मतः ।
सम्यग्व्याहृतिभिर्मन्त्री ततः षट्कोणसन्धिषु ॥ ६२

विलिख्य भुवनेशानीं द्वादशस्थानजृम्भिताम् ।
पूर्ववच्छक्तिबन्धं तु कुर्यात् द्वादशधा प्रिये ॥ ६३

एकैकान्तरितं कुर्वन् मनोज्ञमण्डितं कुरु (?) ।
द्रुमात्मकं द्वादशारे सबिन्दु तुर्यमालिखेत् ॥ ६४

---

* द्वादशगुणितयन्त्रविधानमितोऽपि विशदतया प्रपञ्चसारसारसङ्ग्रहे उल्लिखितम् इति नात्र तत्प्रपञ्चाय यत्नः कृतः ॥

तदूर्ध्वरविकोणेषु सर्वकामार्थसिद्धये ।
अथ द्वादशकोणस्य सन्धिबीजान्तरालतः ॥ ६५

शूलेन विलिखेन्मन्त्री ततः कोणकपोलयोः ।
एकैकस्य च कोणस्य गायत्रीं च समालिखेत् ॥ ६६

तत्पदं सवितुर्वान्तेणियमेतत्क्रमाल्लिखेत् ।
भर्गोदेवस्य धीचोक्त्वा धियो यो नः प्रचोदयात् ॥ ६७

एतदष्टाक्षरं देवि मह्यादि परिकीर्तितमम् ।
चतुर्विंशत्यक्षरेयं गायत्री वेदमातृका ॥ ६८

द्वन्द्वशो विलिखेद्वर्णान् गायत्र्यास्तु विलोमतः ।
तद्बहिः कोणपार्श्वेषु विलोमाग्नेयसन्मनुम् ॥ ६९

प्रणवं भूर्भुवःस्वोग्निर्लिखेदेतत् षडक्षरम् ।
जातवेद इहालेख्य वहसर्वचतुष्टयम् ॥ ७०

कर्माणि साधय स्वाहा विद्या ज्ञेया सुदुर्लभा ।
लिखेत्ततःपरं देवि सर्वकार्यार्थसिद्धये ॥ ७१

अनुलोमां विलोमां च मातृकां वेष्टयेत्ततः ।
भूपुरं पूर्वबीजं तु मण्डितं संलिखेत्ततः । ७२

तद्बहिस्तु कलापत्रं द्वात्रिंशत्केसरान्वितम् ।
महार्कगुणितं देवि निगमागमन्दिरम् ॥ ७३

पूर्ववत्पीठमभ्यर्च्य देवीमावाह्य पूर्ववत् ।
परिवारार्चनं कुर्यात् आदावङ्गार्चनं प्रिये ॥ ७४

हृल्लेखापञ्चकं वर्णैः सहितं पूर्ववद्यजेत् ।
ब्रह्मादियुगषट्कं तु पृथग् द्वादशधा यजेत् ॥ ७५

कोणेषु पूर्वकोणादिकलास्त्राणि ततो यजेत् ।
कराला(ली) विकराला(ली) च तथोमा च सरस्वती ॥ ७६

दुर्गा शची वृषा(उषा) लक्ष्मीः श्रुतिस्मृतिधृतित्रयम् ।
श्रद्धा मेधा धृतिः(मतिः) कान्तिरार्या षोडश कीर्तिताः ॥ ७७

पूर्वादिक्रमतः पूज्या दलाग्रेषु च सन्धिषु ।
[1]श्रीर्ह्रीः पुष्टिः प्रजा चैव सिनीवाली कुहूस्तथा ॥ ७८

[2]रुद्रा वीर्यप्रभानन्दा पोषणी शद्धिदा तथा ।
कालरात्रिर्महारात्रिर्भद्रकाली कपालिनी ॥ ७९

[3]विकृतिर्नन्दिनी चैव मुण्डिनी च ततःपरम् ।
[4]रुद्राणी शङ्कराधीदि(ङ्ग)शरीरिण्यपि कीर्तिता ॥ ८०

नारी नारायणी चैव त्रिशूलिन्यपि पालिनी ।
अम्बिकाऽऽह्लादिनी ज्ञेयं द्वात्रिंशच्छक्तिमण्डलम् ॥ ८१

---

1. श्रीर्ह्रीः पुष्टिस्तथा प्रज्ञेति समीचीनः पाठः ।
2. रुद्रवीर्या प्रभानन्दा पोषिणी ऋद्धिदा शुभा ।
3. विकृतिर्दण्डिनी चैव ... ... ।
4. अत्र लेखकदोषेण अन्यथा वा योजनीयो ग्रन्थशेषः वर्तते —

इन्दुखण्डाशिखण्डिन्यौ निशुम्भमथिनी तथा ।
शुम्भघ्नी महिषघ्नी च तथेन्द्राणी ततःपरम् ॥

इति योजनीयम् ॥

तद्बहिः पिङ्गलाक्षी च विशालाक्षी ततःप्रिये ।
[1]सुबुद्धिवृद्धी च स्वधा स्वाहा श्रद्धा तथैव च ॥ ८२

[2]नित्या वसुन्धरा चैव धात्री त्रैलोक्यपूर्विका ।
गायत्री चैव सावित्री तथा च त्रिदशेश्वरी ॥ ८३

स्वरूपा बहुरूपा च तथा तु [3]बहुरूपिका ।
स्कन्दमाताच्युतप्रीतिर्विमला चामला तथा ॥ ८४

[4] अरुणा तरुणी चैव प्रकृतिर्विकृतिस्तथा ।
सृष्टिः स्थितिः संहृतिश्च सन्ध्या माता सती तथा ॥ ८५

हंसी च [5] मर्हिका वज्री परा देवादिमातृका ।
तथा भगवती चैव देवकी [6] कमला तथा ॥ ८६

त्रिमुखी च तथा सुप्तमुखी देशिकवन्दिता ।
[7] सुरासुरा च सहित (?) मर्दिनी च ततः परम् ॥ ८७

लम्बोष्ठी चोर्ध्वकेशी [8] बह्वशना च वृकोदरी ।
वृषोदरी तथा रेखा रथादिः [9] शशिरेखिका ॥ ८८

---

1. समृद्धिवृद्धी श्रद्धा च स्वाहा चैव स्वधा तथा ।
2. माया वसुन्धरेति पाठः सङ्गच्छते ।
3. बहुरूपिकेति न देवताया निर्देशः बहुरूपाया एव विवरणता ग्राह्या ।
4. अत्र अर्धाश्यामेति देवताद्वयं योजनीयम् ।
5. मदिरा 6. कमलासना 7. सुरविमर्दिनी असुरविमर्दिनी च
8. बहुशिश्नेति ग्रन्थान्तरे दृश्यमानस्य साधुत्वे साधका एव प्रमाणम् ।
9. रथरेखा शितिरेखेति च ग्रन्थान्तरे ।

अपरागगनादिश्च वेगा पवनवेगिका ।
तथा भुवनपाला च तथा च मदनातुरा ॥ ८९

अनङ्गाऽऽनन्दगमना (नङ्गमदना) तथाऽनङ्गादिमेखला ।
अनङ्गकुसुमा चैव विश्वरूपा भयङ्करी ॥ ९०

[1] असुराणां तथाऽक्षोभ्या तथा वै सत्यवादिनी ।
[2] वसुरूपा तथा चैव शुचिवृत्ता परेश्वरी ॥ ९१

वरदाचैव वागीशी चैताः शक्तीस्तु पूजयेत् ।
प्रादक्षिण्यद्वयेनैव सर्वकामार्थसिद्धिदाः ॥ ९२

चतुष्षष्टिमहाशक्तिपूजनं कथितं तव ।
तद्बहिर्लोकपालांश्च भूबिम्बे पूजयेत्सुधीः ॥ ९३

पुनर्देवीं समभ्यर्च्य नैवेद्यादि समर्पयेत् ।
इति ते कथितं सम्यग्देवानामपि दुर्लभम् ॥ ९४

॥ इति श्रीदक्षिणामूर्तिसंहितायां भुवनेश्वरीद्वादशगुणितयन्त्रोद्धारकथने पूजाविधिर्नाम अष्टादशः पटलः ॥

---

1. असुरभयङ्करी

2. वज्ररूपा तथेशानि पुनरेव शुचिव्रता । इति एताभिः (64) चतुष्षष्टिसङ्ख्याकाभिः षष्ठमावरणम् ॥

## ॥ एकोनविंशः पटलः ॥

ईश्वर उवाच —

मुखवृत्तं बिन्दुनादकलाढ्यं पाश उच्यते ।
कामाग्नितार सहितमङ्कुशं विद्धि पार्वति ॥ १

एतन्मध्यगता विद्या यद्वा पूज्या सुरेश्वरी (रि) ।
अक्षरा चाथ पञ्चार्णा ताभ्यां सम्पुटितां प्रिये ॥ २

* तदा घटार्गलोद्धारः कथितो भुवि दुर्लभः ।
येनानुष्ठितमात्रेण त्रैलोक्याकर्षणं भवेत् ॥ ३

सम्प्रदायेन देवेशि श्रीगुरोः कृपयान्वितः ।
सम्यक् सूत्रेण रचयेत् सुवृत्तं वृत्तमुत्तमम् ॥ ४

ततो भूबिम्बयुगलं सम्पुटीकृत्य योजयेत् ।
अष्टकोणं तदा देवि जायते दिङ्मनोहरम् ॥ ५

अष्टदिक्षु तदंशाभ्यां रेखे आकृष्य मान्त्रिकः ।
रेखाभ्यामर्गलं देवि जायतेऽतीव सुन्दरम् ॥ ६

एकेनैव तु मानेन रचयेदर्गलाष्टकम् ।
वृत्तं तदग्रे चन्द्रस्य बिम्बवद्रचयेद्बुधः ॥ ७

पुना रेखाः समाकृष्य पूर्ववद्वृत्तमुत्तमम् ।
विरच्य साधकेन्द्रस्तु वसुकोष्ठयुग्मं क्रमात् ॥ ८

---

* घटार्गलयन्त्रविधानं प्रपञ्चसारसारसङ्ग्रहे उल्लिखितमन्त्रानुसन्धेयम् ॥

व्यक्तं यथा भवेद्द्वि केसराणां वसुद्वयम् ।
अर्गलानीव(नि च) रम्याणि यथा सम्यग्भवन्ति हि ॥ ९

तथा कार्यं महेशानि त्रैलोक्याकर्षणं भवेत् ।
शक्तिबीजं साध्यनाम साधकेन च साधितम् ॥ १०

पाशाङ्कुशमहाबीजयुगसम्पुटितं यजेत् ।
कर्णिकाया मध्यवृत्ते संलिखेत्साधकोत्तमः ॥ ११

अष्टकोणेषु विलिखेत् षडङ्गानि यथाक्रमम् ।
अग्नीशासुरवायव्यकोणेषु मनुवित्तमः ॥ १२

कवचान्तानि संलिख्य मध्ये नेत्रं यजेद्बुधः ।
चतुर्दिगन्तकोणेषु चतुर्थास्त्रं लिखेत्प्रिये ॥ १३

वृत्तादिवसुकोणान्तं लिखेद्वस्वर्गलेषु च ।
बीजवृन्दं महेशानि सम्प्रदायक्रमेण हि ॥ १४

वह्निशक्ति परित्यज्य तत्र भूभूषितं कुरु ।
तद्बीजं स्वरसम्भिन्नं ऋॠऌॡविवर्जितम् ॥ १५

एवं द्वादशधा तच्च चतुर्धा कुरु सुन्दरि ।
आद्यत्रिकं पूर्वमुख्यं लिखेदुत्तरतः प्रभुः ॥ १६

द्वितीयं पूर्वमुख्यं तु लिखेद्दक्षिणतः सुधीः ।
तृतीयं पश्चिमे भागे तथा दक्षिणतो लिखेत् ॥ १७

चतुर्थमर्गलं तद्वत् पश्चिमे तूत्तरान्तिकम् ।
भुवं हित्वार्कबीजानां तत्र वायुं नियोजयेत् ॥ १८

अग्न्यर्गलायां त्रितयमाद्यं पूर्वत आलिखेत् ।
तथा पश्चिमतोऽप्यन्यत्त्रिकं संलिख्य मान्त्रिकः ॥ १९

मारुतार्गलके तद्वल्लिखेत्पश्चिमतस्त्रिकम् ।
पूर्वतोऽपि च देवेशि सर्वकार्यार्थसाधकः ॥ २०

यमार्गलायां देवेशि कथयामि वरानने ।
वायुं हित्वार्कबीजानां नीरं तत्र विनिक्षिपेत् ॥ २१

पूर्वमाप्यादित्रितयं द्वितीयं पश्चिमान्तगम् ।
अथोत्तरार्गलायाश्च लिखेत्पश्चिमतः सुधीः ॥ २२

चतुर्थं पूर्वतो देवि गुरुमार्गेण सुन्दरि ।
तारं हित्वार्कबीजानां रेफं तत्र विनिक्षिपेत् ॥ २३

लिखेद्रक्षोऽर्गलायां तु त्रिकमाद्यं त्रिकं परम् ।
दक्षिणोत्तरतो मन्त्री क्रमाच्चैवार्गले पुनः ॥ २४

आदावुत्तरतो देवि पश्चाद्दक्षिणमार्गतः ।
अन्तराष्टसु कोणेषु केसराख्येषु संलिखेत् ॥ २५

पाशं श्रीभुवनेशानि कामबीजचतुष्टयम् ।
विपरीतं च वर्णज्ञो वस्वर्णमिदमालिखेत् ॥ २६

अन्त्यपाशं परित्यज्य सृणिं संयोज्य साधकः ।
तद्बहिर्वसुकोणेषु विलिखेत्तु क्रमेण च ॥ २७

अष्टवर्णान् पूर्वरूपान् अपरान् केसरेषु च ।
अन्तकोष्ठस्वरूपेषु चण्डकात्यायनीमनोः ॥ २८

शक्तिगौरीत्रिकं रुद्रदयिते पञ्चवर्णकम् ।
योगेश्वरीं समालिख्य कवचास्त्राग्निवल्लभाम् ॥ २९

चण्डकात्यायनीदेवी त्रिषु लोकेषु दुर्लभा ।
अथातः सम्प्रवक्ष्यामि बहिरस्यैव वेष्टनम् ॥ ३०

हंसः पदं वामनेत्रं बिन्द्विन्दुपरिभूषिताम् ।
पूनर्हंसः पदं चैतत्पञ्चार्णमनुमालिखेत् ॥ ३१

स्वरद्वन्द्वोदरगतं सप्तार्णं चाष्टधा भवेत् ।
बहिः पद्मं चाष्टपत्रं अतिसुन्दरमालिखेत् ॥ ३२

दलेषु कर्णिकामन्त्रास्त्रियं चाष्टसु क्रमात् (?) ।
पाशाङ्कुशाभ्यां तद्बाह्ये वृत्ताकारेण वेष्टयेत् ॥ ३३

अनुलोमप्रकारेण मातृकावेष्टनं लिखेत् ।
तथैव प्रतिलोमं च मातृकावेष्टनं प्रिये ॥ ३४

एतत्सर्वं ठकारेश वेष्टयेन्महता प्रिये ।
घटार्गलं महायन्त्रं पुरुषार्थफलप्रदम् ॥ ३५

अस्मिन्त्समावाह्य देवीमुपचारैः समर्चयेत् ।
आदावङ्गानि देवेशि देव्यङ्गेषु च विन्यसेत् ॥ ३६

आनन्दरूपिणीं ध्यात्वा मुद्रासन्नद्धविग्रः ।
परिवारार्चनं कुर्यात्प्रथमावरणं श्रृणु ॥ ३७

हृल्लेखापञ्चकं चाद्यं द्वितीयाङ्गावृतिः प्रिये ।
कोणाष्टके यथापूर्वं ततः पद्मदलेषु च ॥ ३८

मातरो देवदेवेशि पूर्वादि परिपूजयेत् (?) ।
लोकपालाश्च तद्बाह्ये पुनरम्बां समर्चयेत् ॥ ३९

उपचारैर्मनोरम्यैस्ताम्बूलान्तैः पृथक् पृथक् ।
यथाशक्ति जपं कुर्यान्नियमेन तु सुन्दरि ॥ ४०

अयं नित्यप्रकारस्तु पुरश्चरणकं शृणु ।
रविलक्षं जपेद्विद्यां तद्दशांशेन होमयेत् ॥ ४१

त्रिमध्वक्तैः क्षीरवृक्षसमिद्भिश्च तथा तिलैः ।
समासेन हुनेत्सम्यक् पुरश्चारी ततो भवेत् ॥ ४२

जातीपुष्पैर्वश्यकामः सम्पत्यै कमलैः प्रिये ।
समिद्भिः पुष्टिकामस्तु खादिरैर्जुहुयात्प्रिये ॥ ४३

एकाक्षरेऽपि देवेशि सन्त्यत्र भुवनानि तु ।
व्योमबीजे महेशानि कैलासादि प्रतिष्ठितम् ॥ ४४

वह्निबीजं तु वर्णादिनिष्पन्नं बहुधा प्रिये ।
तेनायं वर्तते लोको भूमिमण्डलसंस्थितः ॥ ४५

तुर्यस्वरेण पाताले शेषरूपेण धार्यते ।
महाभूमण्डलं तस्मात् पातालस्यापि नायिका ॥ ४६

अतः पृथङ्महेशानि भुवनाधीश्वरो भवेत् ।
हकारे व्योमतुर्येण स्वरेणानिलसम्भवः ॥ ४७

विकारे सति रेफेण साक्षाद्वह्निस्वरूपिणी ।
वह्निवीर्यं वसु ज्ञेयं तस्माद्रेफे वसुन्धरा ॥ ४८

अत एव महेशानि रत्नयोः समता भवेत् ।
बिन्दु चन्द्रामृता(तं) देवी स्रावयन्ती जगत्त्रयम् ॥ ४९

द्रवरूपा भवेत्तस्मात् पूज्यते चार्धमात्रया ।
अत एव महेशानि भुवनेशीति कथ्यते ॥ ५०

॥ इति श्रीदक्षिणामूर्तिसंहितायां घटार्गलयन्त्रोद्धारसाधनं नामैकोनविंशः पटलः ॥

## ॥ विंशः पटलः ॥

ईश्वर उवाच —

पञ्चमीं रत्नविद्येशीं कथयामि शृणु प्रिये ।
यस्याः स्मरणमात्रेण पवनोऽपि स्थिरो भवेत् ॥ १

वाग्भवं बीजमुच्चार्य मदनुग्रहबिन्दुभिः ।
नादेनभूषितं बीजं पार्थिवं चोत्तरे ततः ॥ २

पुनराद्यं महेशानि नमो भगवति संलिखेत् ।
वार्तालि युग्मं वाराहि पुनरेतत्त्रयं लिखेत् ॥ ३

वराहमुखि च द्वन्द्वं सन्धिहीनं ततःपरम् ।
अन्धे चान्धिनि सप्तार्णं हृदन्तेन भवेत्प्रिये ॥ ४

रुन्धे रुन्धिन्यतो हृच्च जम्भे जम्भिनि हृत्तथा ।
मोहे मोहिनि हृच्चापि स्तम्भे स्तम्भिनि हृत्तथा ॥ ५

एतदुक्त्वा महेशानि सर्वदुष्टप्रदुष्ट च ।
षष्ट्यन्तेन च सर्वेषां सर्ववागिति चित्त च ॥ ६

चक्षुर्मुखगतिं प्रोक्त्वा जिह्वास्तम्भं कुरुद्वयम् ।
शीघ्रं वश्यं कुरुद्वन्द्वं वाग्भवं पार्थिवं पुनः ॥ ७

[1] ससर्गठचतुष्कान्ते कवचास्त्राग्निवल्लभा ।

---

1. मन्त्रानुपूर्वी एवं भवति ऐं ग्लौं ऐं नमो भगवति वार्तालि वार्तालि वाराहि २ वराहमुखि २ अन्धे अन्धिनि नमः । रुन्धे रुन्धिनि नमः । जम्भे जम्भिनि नमः । मोहे मोहिनि नमः । स्तम्भे स्तम्भिनि नमः । सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुखगतिजिह्वास्तम्भं कुरु २ शीघ्रं वश्यं कुरु २ ऐं ग्लौं ठः ठः ठः ठः । हुं फट् स्वाहा इति ॥

* चतुर्दशोत्तरशतं मन्त्रवर्णा भवन्ति च ॥ ८

चतुश्चत्वारिंशतिभिः (?) पदैर्न्यासस्तु कीर्त्यते ।
मातृकावन्न्यसेद्वक्त्रे पदानि दश मन्त्रवित् ॥ ९

दोः पत्सन्धिषु साग्रेषु न्यसेद् विंशतिसङ्ख्यकान् ।
पदार्णान्यपि विन्यस्य पार्श्वयोरेकमुत्तमम् ॥ १०

अनेनैव प्रकारेण मातृकावन्न्यसेत् सुधीः ।
ततः षडङ्गविन्न्यासं कुर्याद्देहविशुद्धये ॥ ११

वार्ताळ्यास्तु पदद्वन्द्वं हृदयं च ततः परम् ।
वाराहियुगलं देवि शिरोमन्त्र उदाहृतः ॥ १२

वराहमुखियुग्मं तु शिखा सप्ताक्षरं ततः ।
कवचं च ततः सप्तवर्णैर्मन्त्रं न्यसेत्प्रिये ॥ १३

ततः सप्ताक्षरं चास्त्रं षडङ्गानि न्यसेत्प्रिये ।
सर्वेण व्यापकन्न्यासमाचरेत्सिद्धये ततः ॥ १४

यन्त्रोद्धारं प्रवक्ष्यामि येन त्रैलोक्यमोहनम् ।
ताम्रे वा राजते स्वर्णमये वा भूर्जपत्रके ॥ १५

लिखेद्रोचनया वापि कुङ्कुमागरुचन्दनैः ।
हरिद्रया वारुणाद्यैर्लिखेच्चक्रं मनोहरम् ॥ १६

त्रिकोणं पञ्चकोणं च षट्कोणं वसुपत्रकम् ।
शतपत्रं सहस्रारं ततो भूबिम्बमालिखेत् ॥ १७

---

* अन्यत्र मन्त्रशास्त्रग्रन्थेषु ठचतुष्टययुक्ततयैव विद्येयं उद्धृता दृश्यते ॥

चतुर्द्वारविशोभाढ्यं मध्ये सिंह्मासनं यजेत् ।
वाणीभूबीजयुग्मेन सम्पूज्याः सर्वमातरः ॥ १८

स्फटिकाचलमध्यस्थं पीठमेतद्विचिन्त्य तु ।
देवीमावाहयेत्तत्र ध्यानं कुर्याद्विचक्षणः ॥ १९

प्रत्यग्रारुणसङ्काशपद्मान्तर्गर्भसंस्थिताम् ।
इन्द्रनीलमहातेजःप्रकाशां विश्वमातरम् ॥ २०

कदम्बमुण्डमालाढ्यां नवरत्नविभूषिताम् ।
अनर्घ्य(र्घ)रत्नगटितमुकुटश्रीविराजिताम् ॥ २१

कौशेयार्धोरुकां चारुप्रवालमणिभूषणाम् ।
दण्डेन मुसलेनापि वरदेनाऽभयेन च ॥ २२

विराजितचतुर्बाहुं कपिलाक्षीं सुमध्यमाम् ।
नितम्बिनीमुत्पलाभां कठोरघनसत्कुचाम् ॥ २३

कोलाननां यजेद्देवीमुपचारैः * सहेतुभिः ? ।
गन्धपुष्पादिभिः सम्यक् सर्वकामार्थसिद्धिदाम् ॥ २४

सप्ततिस्तु सहस्राणि पुरश्चरणसिद्धये ।
तद्दशांशेन होमस्तु तिलैर्बन्धूकपुष्पकैः ॥ २५

त्रिमध्वक्तैर्हेतुमिश्रैर्हरिद्राखण्डकैर्हुनेत् ।
लाक्षाचरुपुरुद्रव्यैः पिशितैर्विविधैरपि ॥ २६

---

* हेतु — तैजसधातुविशेषः इति वैद्यशास्त्रेषु । शब्दकल्पद्रुमेऽपि हेतुशब्दस्य तैजसधातुविशेषत्वेनार्थकथनं च सङ्गच्छते ॥

सिद्धिर्भवति देवेशि मन्त्रिणो नात्र संशयः ।
शृणु पूजाविधानं तु देवीमावाह्य सिद्धये ॥ २७

आदावङ्गावृतीर्यष्ट्वा त्वग्नीशासुरवायुषु ।
मध्ये दिक्षु त्रिकोणान्तस्त्रिषु कोणेषु संशृणु ॥ २८

वामवामेतराग्रेषु क्रमेण त्रितयं यजेत् ।
जम्भिनीं स्तम्भिनीं चैव मोहिनीं सर्वसिद्धये ॥ २९

अग्निन्याद्यास्तु देवेशि स्तम्भिन्यन्ताः प्रपूजयेत् ।
पञ्चकोणे महादेवि पुरआदिक्रमेण तु ॥ ३०

मनुस्था एव तद्वाह्ये ततो मातर्चनं भवेत् ।
षडारे पुर आरभ्य प्रादक्षिण्येन पूजयेत् ॥ ३१

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी प्रिये ।
माहेन्द्री चैव चामुण्डा डाकिन्याद्याः शृणु प्रिये ॥ ३२

डाकिनी राकिणी देवि लाकिनी काकिनी तथा ।
शाकिनी हाकिनी चैव ततः षट्कोणके यजेत् ॥ ३३

षट्कोणपार्श्वयोः पूज्ये देव्यौ सर्वार्थसिद्धये ।
हलं कपालं दधतीं क्रोधिनीं वामतो यजेत् ॥ ३४

मुसलेष्ठ (षु) करां देवीं स्तम्भिनीं दक्षिणे यजेत् ।
चण्डोच्चण्डं महेशानि षट्कोणपुरतो यजेत् ॥ ३५

तासां कपालं डमरुं त्रिशूलं दधतं करैः ।
नग्नं नीलं जटाराजन्मस्तकं पञ्चमीसुतम् ॥ ३६

ततोऽष्टदलपत्रेषु वार्ताल्याद्यष्टकं यजेत् ।
अणुस्थमेव तस्याग्रे पूजयेन्महिषाष्टकम् ।। ३७

शृङ्गाद्याद्याश्च रक्तादि कुक्षिवक्त्रनिकृन्तनम् ।
नीलजीमूतसङ्काशं रिपुभूपातनक्षमम् ।। ३८

शतपत्रं क्रमात्पूज्यं रुद्रास्त्रवसुदस्त्रकैः ।
त्रयस्त्रिंशद्दलगतैस्त्रिवारोच्चारितैः पृथक् ।। ३९

अवशिष्टे दले योज्याः स्तम्भिनीदम्भिनीयुताः ।
शताराग्रे महेशानि महासिद्धां समर्चयेत् ।। ४०

सहस्रपत्रैः सम्पूज्यं वाराहीणां सहस्रकम् ।।
अङ्कुशान्ते महादेवि वाराह्यै नम आलिखेत् ।। ४१

अनेन मनुना देवि पूजयेत्तु सहस्रधा ।
भूबिम्बे वटुकक्षेत्रयोगिनीनां गणान् यजेत् ।। ४२

पुनर्देवीं समाराध्य गन्धपुष्पादितर्पणैः ।
अक्षमाला हरिद्राया मुख्या स्तम्भनकारिणी ।। ४३

इति श्रीदक्षिणामूर्तिसंहितायां पञ्चमीक्रमार्चनविधानं नाम विंशः पटलः ॥

## ॥ एकविंशः पटलः ॥

ईश्वर उवाच —

अथातः सम्प्रवक्ष्यामि तर्पणं भुवि दुर्लभम् ।
तिलमैरेयबन्धूककुसुमैस्तर्पयेच्छिवाम् ॥ १

मनोहरे सुवर्णादिपात्रे सम्पूज्य पूर्ववत् ।
अनेन विधिना देवीप्रियो भवति निश्चयात् ॥ २

एतस्या एव विद्यायाः कुण्डेऽस्ति परमेश्वरि ।
विशेषः कथ्यते सोऽत्र सर्ववैरिनिकृन्तनः ॥ ३

एकहस्तमितं कुण्डं अर्धहस्तेन विस्तरम् ।
हस्तखातं मनोरम्यं होमायात्र निगद्यते ॥ ४

स्तम्भने शिवदिग्भागो निग्रहे यमदिग्भवेत् ।
अस्मिन् कुण्डे महेशानि भैरवाग्निं प्रपूजयेत् ॥ ५

लौकिकं वा यजेन्मन्त्री वक्ष्यमाणैः परेश्वरि ।
हृदयं भुवनेशान्या भुवनेशीं च संलिखेत् ॥ ६

तस्या एव शिखां देवि बीजत्रयमिदं प्रिये ।
उक्त्वा भैरवमुच्चार्य चतुर्थ्यन्तं नमो लिखेत् ॥ ७

ह्रियाग्निपूजनं कृत्वा ततोऽग्नेराहुतीर्यजेत् ।
पूर्वं बीजत्रयं भैरवाग्नेये द्विठमालिखेत् ॥ ८

अनेनैकाहुतिं दत्वा नीलोत्पल सृजानले (?)
नीलोत्पलैर्भैरवाग्निं तापिञ्छैरपि वा यजेत् ॥ ९

तापिञ्छैःस्तम्भने होमो विज्ञेयस्तु चतुःशतम् ।
देवदारुतिलैर्लाक्षाहरिद्राभिस्तथा भवेत् ॥ १०

त्रिसप्तमध्यरात्रेषु प्रत्येकं साष्टयुक्शतम् ।
हरिणीमुद्रया होमः कथितस्तव सुन्दरि ॥ ११

दक्षिणे होमकुण्डस्य हस्तमात्रं तिलान् प्रिये ।
प्रसार्य भाण्डे स्वर्णादि(दौ) मृद्ये वा लोहसम्भवे ॥ १२

कृष्णां शाटीं परिक्षिप्योत्पलैस्तापिञ्छपुष्पिणी (?)
तिलमिश्रैरम्बुभिस्तं पूजयेन्मनुवित्तमम् ॥ १३

वाग्भवं धरणीमुक्त्वा कर्षणादिहलाय च ।
नवाक्षरमिदं चोक्त्वा हृदन्तं मन्त्रमालिखेत् ॥ १४

अङ्कुशं क्रोधिने देवि मुसलाय नमो लिखेत् ।
सप्तविंशतिकृत्वस्तु देवीमन्त्रं समुच्चरेत् ॥ १५

घटं स्पृष्ट्वा हृदि ध्यात्वा पञ्चमीं परमेश्वरीम् ।
तद्घटस्थोदकैः शत्रुमभिषिञ्चेद्विचक्षणः ॥ १६

कफान्वितः क्षयी वैरी वश्यो भवति निश्चयात् ।
अथ निग्रहहोमस्य विधिं वक्ष्ये शृणु प्रिये ॥ १७

खरमेषाङ्गरक्तेन लाजाचूर्णतिलैः सह ।
मिश्रं पिण्डं तु पिण्डेन मेलयेद्धेतुना प्रिये ॥ १८

पिशितैर्गन्धपुष्पादिधूपदीपैश्च साधकः ।
तर्पयेद्योगिनीपिण्डं परमानन्दसुन्दरम् ॥ १९

सपत्नवेश्म सङ्कल्प्य मृदा वा लोहकेन वा ।
निवेश्य कुण्डे वक्त्रे वा हुनेल्लाक्षारजःकणैः ॥ २०

अयुतं सञ्जपेद्देवि विपक्षक्षणदां हुनेत् ।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि वैरिणः ॥ २२

योगिनीनां मुखे देवि पतन्त्यत्र न संशयः ।
अथातः सम्प्रवक्ष्यामि साधकानन्दकारणम् ॥ २३

प्रणवं प्रणवेनैव सम्पुटीकृत्य योजयेत् ।
कुलिशाग्रधराबीजं पार्थिवं मण्डलं ततः ॥ २४

कुलिशान्तर्लिखेत्साध्यं बाह्ये विद्यां समालिखेत् ।
चतुरङ्कुशसंरुद्धं सर्वमेतद्वरानने ॥ २५

रुद्रस्वरे समारोप्य पीतपुष्पैः समर्चयेत् ।
पञ्चमीशाकटं यन्त्रं त्रिषु लोकेषु दुर्लभम् ॥ २६

सहस्रसङ्ख्यकानेन निशाभाण्डा क्षिपेद्बुधः (?) ।
श्यामलोहितमन्त्रज्ञो मन्त्रपुष्पैः समर्चयेत् ॥ २७

प्रेतधूम्रानले क्षिप्त्वा यजेद्धुतविधानतः ।
सौवर्णं राजतं ताम्रं क्रमेणैतत्समर्चयेत् ॥ २८

कटाक्षार्थी हरिद्राभैः पुष्पैराराधयेच्छिवाम् ।
धान्यराशौ च सायाह्ने विनिक्षिप्य च तद्भवेत् ॥ २९

नूतने कुम्भकारस्य खर्परे यन्त्रमालिखेत् ।
अञ्जनाभैः समभ्यर्च्य कुसुमैः पथि देशिकः ॥ ३०

उच्चाटयेत्तदा शीघ्रं कोटयश्च सुस्थिरं रिपुम् ।
तद्भाण्डं तु मुखीद्रव्यैर्भिन्नंभिन्नाञ्जनप्रभैः ।। ३१

समुद्धृत्य समभ्यर्च्य लोहकारगृहे क्षिपेत् ।
बाध्यमानो रोगजालैर्मरणं प्राप्नुयाद्रिपुः ।। ३२

निःसाणे पटहे वाद्ये विलिखेन्मनुवित्तमः ।
युध्येत ध्वनिमाकर्ण्य पलायन्ते महाबलाः ।। ३३

धूमेन तौ समालिख्य(?) धूमाभैरर्चयेत्प्रिये ।
नश्यन्ति दृष्टयस्तेषां शत्रूणां नान्यथा भवेत् ।। ३४

हरिद्रया शिलामध्ये समालिख्यार्चयेत्प्रिये ।
पीतपुष्पैस्तु तद्यन्त्रमधोवर्णं विनिक्षिपेत् ।। ३५

वाक्स्तम्भो जायते शीघ्रं वादिनां परमेश्वरि ।
अथ सीसे समालिख्य सीसभैः कुसुमैर्यजेत् ।। ३६

शिलाधस्ताद्विनिक्षिप्य व्यवहारे जयी भवेत् ।
सर्वलोहमये पात्रे(पत्रे) सितपुष्पैः समर्चयेत् ।। ३७

वाक्पतिर्जायते मन्त्री पञ्चसारेऽथ संलिखेत् ।
पञ्चवर्णैः प्रसूनैश्च पूजयेत्सर्वकर्मकृत् ।। ३८

अथातस्तिमिरा[1]मिश्रे सीसयुग्मे लिखेद्बुधः ।
अभ्यर्च्य कुसुमै रम्यैः प्रेतभूमौ प्रतापयेत् ।। ३९

तेनाऽऽकृष्टिर्भवेदाशु यूनां वा योषितामपि ।
वृषगर्भे न्यसेच्चक्रं शशपात्रे(पत्रे) सुरञ्जितम् ।। ४०

---

1. तिमिर – Iron Rust.

*बहिष्ठग्रामभागेभ्यः सम्प्रविष्टा भवन्ति हि (?) ।
साध्यनक्षत्रवृक्षस्य गर्भे चक्रं प्रविन्यसेत् ॥ ४१

वृक्षस्य यत्कृतं देवि साध्यस्य भवति ध्रुवम् ।
जले क्षिप्तं दोषदायि वह्नौ क्षिप्तं तु तापकृत् ॥ ४२

रोगदं भस्मनिक्षिप्तं हितदं भूमिगं प्रिये ।
अनङ्गकामिनीं दद्यात् कुम्भे क्षिप्तं सुतप्रदम् ॥ ४३

पूर्वस्यां दिशि निक्षिप्तं रिपूणां भयदं भवेत् ।
आग्नेययमदिग्भागे वैरिणां मृत्युदं भवेत् ॥ ४४

तथा निर्ऋतिदिग्भागे शत्रून्मादनकारणम् ।
पश्चिमे रोगदं तेषां गदितं(गददं) वायुदिग्गतम् ॥ ४५

धनदं चोत्तरे भागे साधकस्य न संशयः ।
ईशानगं भ्रान्तिकरं वैरिणां परमेश्वरि ॥ ४६

मध्यगं सर्वकार्याणि शत्रूणां नाशयेद् ध्रुवम् ।
एतस्या एव विद्याया मध्यरात्रेऽर्चनं भवेत् ॥ ४७

अन्यथा देवताशापो जायतेऽतीव दुस्तरः ।

इति श्रीदक्षिणामूर्तिसंहितायां पञ्चमीशकटयन्त्रोद्धारो नाम एकविंशः पटलः ॥

* के ? सम्प्रविष्टा भवन्ति इति नोल्लिखितम् ।

## ॥ द्वाविंशः पटलः ॥

ईश्वर उवाच —

पाञ्चरात्रं महातन्त्रं कथितो वैष्णवागमः ।
एनामाराध्य देवेशि पालकोऽभूज्जगत्त्रये ॥ १

विद्याकदम्बचक्रस्थाः शिवविद्या मयेरिताः ।
ताः सन्ति बैन्दवे चक्रे तस्माच्छिवमयीं शिवा ॥ २

सिद्धरत्नमहातन्त्रे कथितो गणपागमः ।
सप्तकोटिमहामन्त्रैर्मण्डितस्तन्मयी शिवा ॥ ३

वामदेव महातन्त्रे सौरज्ञानप्रकाशकाः ।
मनवस्तन्मयी देवी ज्ञानशक्तिरितीरिताः ॥ ४

अतः सेव्या च देवी च चतुरायतनैः सह ।
सिह्मासनप्रसङ्गेन चतुराम्नायदेवताः ॥ ५

कथिताः परमेशानि सम्पदेषां न संशयः ।
यस्य स्मरणमात्रेण पलायन्ते महापदः ॥ ६



इति श्रीदक्षिणामूर्तिसंहितायां चतुराम्नायविवरणं नाम द्वाविंशः पटलः ॥

## ॥ त्रयोविंश: पटलः ॥

ईश्वर उवाच —

अथ वक्ष्ये महादेवि नित्याविवरणं क्रमात् ।
कामेश्वरीमहाभेदाः बहवः सन्ति पार्वति ॥ १

तत्र कामेश्वरी नित्या कथ्यते भुवि दुर्लभा ।
त्रिपुरेशी समुच्चार्य तारान्ते हृदयं ततः । २

कामेश्वरीपदं चोक्त्वा इच्छाकामफलप्रदे ।
सर्वसत्ववशं चोक्त्वा करि सर्वंजगत्पदम् ॥ ३

क्षोभान्ते तु करे हुं हुं बाणाश्च त्रिपुरेश्वरि ।
विपरीतां समालिख्य वेदवेदाक्षरी प्रिया ॥ ४

आद्यभागत्रयेणैव द्विरावृत्या षडङ्गकम् ।
कामेश्वरीव रूपादि ध्यानं यन्त्रार्चनादिकम् ॥ ५

इति श्रीकामेश्वरीनित्याविधिः ॥

ईश्वर उवाच –

अथ वक्ष्ये महेशानि विद्यां श्रीभगमालिनीम् ॥ ६

वाग्भवं भग शब्दान्ते भगे(भुगे) वाग्भवमेव च ।
भगिन्यन्ते वाग्भवं च भगोदरि च वाग्भवम् ॥ ७

---

* नित्योत्सवे श्रीकामेश्वरीमनुरेवं —

ऐं ह्रीं श्रीं अं ऐं सकल ह्रीं नित्यक्लिन्ने मदद्रवे सौः इति ।

भगमाले वाग्भवं च वाग्भवादौ भगावहे ।
भगगुह्ये वाग्भवं च भगयोनि च वाग्भवम् ॥ ८

भगन्यन्ते पातिनीति वाग्भवं भग सर्वं च ।
वन्दि वाग्भवमालिख्य(?) ततो भगवशङ्करि ॥ ९

वाग्भवं भगरूपे तद्भगनित्य च वाग्भवम् ।
भगक्लिन्ने वाग्भवं च भगस्यान्ते समालिखेत् ॥ १०

रेते वाग्भवमालिख्य भगक्लिन्ने च वाग्भवम् ।
भगक्लिन्नद्रवे चान्ते भगं क्लेदय चालिखेत् ॥ ११

भगं द्रावय चालिख्य भगामोघे भगेति च ।
बिच्चे भगं क्षोभयेति सर्वसत्वान् भगेश्वरि । १२

वाग्भवं च भगं क्लिन्नं वाग्भवं भगजंलिखेत् ।
वाग्भवं च भगं ब्लूं च वाग्भवं भग हें लिखेत् ॥ १३

भगक्लिन्ने च सर्वाणि भगान्यथ च मे लिखेत् ।
वशमानय चालिख्य भगपञ्चममन्मथम् ॥ १४

भगान्तरे भगान्तेऽथ हर ब्लेमात्मकं लिखेत् ।
भगान्ते पञ्चमं कामं ततो वै *भगमालिनीम् ॥ १५

---

* नित्योत्सवे–भगमालिनीमनुस्वरूपमेवं – "ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोनि भगनिपातिनि, सर्वभग-वशङ्करि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे, क्षुभ क्षोभय सर्वसत्वान् भगेश्वरि ऐं ब्लूं जें ब्लूं भें ब्लूं मों ब्लूं हें ब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हर ब्लें ह्रीं" इति ॥

ङेन्तामुच्चार्य विद्येयं त्रैलोक्यवशकारिणी ।
चतुराधिक्यविंशत्या द्विशतेन च मण्डिता ॥ १६

वर्णानां भगमालेयं नित्या सकलसिद्धिदा ।
ऋषिरस्यास्तु सुभगो गायत्रं छन्द उच्यते ॥ १७

देवतेयं तु बीजं तु हर ब्लेमात्मकं प्रिये ।
शक्तिस्त्रीं बीजकं यं तु कीलकं परमेश्वरि ॥ १८

षड्दीर्घस्वरभेदेन न्यसेदङ्गानि देशिकः ।
कामन्यासं तथा बाणन्यासं कुर्यात्तु पूर्ववत् ॥ १९

कदम्बवनमध्यस्थामुद्यत्सूर्यसमद्युतिम् ।
नानाभूषणसम्पन्नां त्रैलोक्याकर्षणक्षमाम् ॥ २०

पाशाङ्कुशौ पुस्तकं च तौलिकीं नखलेखनीम् ।
वरदं चाभयं चैव दधतीं विश्वमातरम् ॥ २१

एवं ध्यात्वा ततो लक्ष्मीं मिताहारो जपेन्नरः ।
तद्दशांशेन मधुकैस्त्रिमध्वक्तैर्हुनेत्ततः ॥ २२

त्रिकोणं चैव षट्कोणं ततः षोडशपत्रकम् ।
ततोऽष्टपत्रं भूबिम्बमेव मण्डलमालिखेत् ॥ २३

मध्ये देवीं समभ्यर्च्य ततोऽङ्गावरणं यजेत् ।
विद्यादिशक्तित्रितयं त्रिकोणेषु प्रपूजयेत् ॥ २४

क्रमेण चाग्रमारभ्य पुनस्तेषु समर्चयेत् ।
सुभगां च भगां चैव तथा च भगसर्पिणीम् ॥ २५

बाणांश्च देवि तत्रैव पूर्ववत्पूजयेत्सुधीः ।
भगमालादिषट्कं च कोणषट्के प्रपूजयेत् ॥ २६

वशङ्करीं च रूपां च नित्यां क्लिन्नां स्वरूपिणीम् ।
तथा भगवतीं चैव वरदां परमेश्वरीम् ॥ २७

रेतां सुरेतां क्लिन्नां च तथा क्लिन्नद्रवामपि ।
अमोघां चैव विद्यां च तथैव क्लिन्नदेवताम् ॥ २८

एताः षोडश देवेशि भगशब्देन योजयेत् ।
अष्टपत्रेषु देव्यस्तु मातरः परमेश्वरि ॥ २९

इन्द्रादयस्तु भूबिम्बे पुनर्देवीं समर्चयेत् ॥ ३०

इति भगमालिनीनित्याविधिः ॥

**ईश्वर उवाच –**

भुवनेशीं समुच्चार्य नित्यक्लिन्ने मदद्रवे ।
वह्निजाया च विद्येयं रुद्रवर्णा महोत्कटा ॥ ३१

एकेन च तथा द्वाभ्यां द्वाभ्यां द्वाभ्यां क्रमात्प्रिये ।
द्वाभ्यां द्वाभ्यां षडङ्गानि विन्न्यसेद्देशिकोत्तमः ॥ ३२

रक्ताङ्गीं रक्तवसनां चन्द्रचूडां त्रिलोचनाम् ।
स्विद्यद्वक्त्रां मदाघूर्णलोचनां रत्नभूषिताम् ॥ ३३

पाशाङ्कुशौ कपालं च महाभीतिहरं तथा ।
दधतीं संस्मरेन्नित्यां पद्मासनविराजिताम् ॥ ३४

वर्णलक्षं जपेन्मन्त्रं तद्दशांशेन होमयेत् ।
तिलैस्त्रिमधुसंमिश्रैः पुरश्चारी भवेद्बुधः ॥ ३५

मधूकपुष्पैर्वा होमो हविषा वाथ नीरजैः ।
त्रिकोणं चाष्टपत्रं च ततो भूबिम्बमालिखेत् ॥ ३६

आदौ देवीं समभ्यर्च्य ततोऽङ्गावरणं यजेत् ।
त्रिकोणे पूजयेद्देवि नित्यक्लिन्नां* मदद्रवाम् ॥ ३७

मातरो दलमूलेषु दलमध्येषु पूजयेत् ।
नित्यां निरञ्जनां क्लिन्ना क्लेदिनीं मदनातुराम् ॥ ३८

मदद्रवां द्राविणीं च क्षोभिणीं च प्रपूजयेत् ।
भूबिम्बे लोकपालाः स्युः पुनर्देवीं प्रपूजयेत् ॥ ३९

इति नित्यक्लिन्नानित्याविधिः ॥

ईश्वर उवाच —

अथ वक्ष्ये महेशानि भेरुण्डां परमेश्वरीम् ।
भरोमात्मकमुच्चार्य त्वङ्कुशाभ्यां सुवेष्टितम् ॥ ४०

---

* नित्यक्लिन्नामन्त्रस्वरूपम् –

" ॐ ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा " इति ॥

भेरुण्डास्वरूपम् –

" ओं क्रों भ्रों क्रौं झ्रौं छ्रौं ज्रौं स्वाहा " इति ॥

अन्त्यहीनं चवर्गं च चतुर्थरिफमण्डितम् ।
अनुग्रहेन्दुबिन्द्वाढयं तारस्वाहोदरास्थितम् ॥ ४१

मनुर्दशार्णो देवेशि महाविषहरो भवेत् ।
ऋषिरस्या महाविष्णुर्गायत्रं छन्द उच्यते ॥ ४२

देवतेयं पराशक्तिस्तृतीयं बीजमुच्यते ।
वह्निजाया तु शक्तिःस्यात् कीलकं सृणिरेव च ॥ ४३

षड्दीर्घस्वरभेदेन बीजेनैव षडङ्गकम् ।
चन्द्रकोटिप्रतीकाशां स्रवन्तीममृतद्रवैः ॥ ४४

नीलकण्ठां त्रिणेत्रां च नानाभरणभूषिताम् ।
इन्द्रनीलस्फुरत्कान्ति शिखिवाहनसंस्थिताम् ॥ ४५

पाशाङ्कुशं कपालं च छुरिकां वरदाभयौ ।
बिभ्रतीं हेमसम्बाधा(बद्ध)गरुडोद्गारभूषिताम् ॥ ४६

एवं ध्यात्वा जपेद्वर्णलक्षं तु विजितेन्द्रियः ।
तद्दशांशेन जुहुयात् श्वेतपद्मैः परेश्वरि ॥ ४७

त्रिकोणं चाष्टपत्रं च ततो भूबिम्बमालिखेत् ।
मध्ये प्रणवबीजे च त्रिकोणस्य च पार्श्वयोः ॥ ४८

सृणिद्वयं त्रिकोणेषु पञ्चमादित्रयं न्यसेत् ।
अवशिष्टं त्रिकोणाग्रे त्रिकोणद्वग्र आलिखेत् ॥ ४९

मालामन्त्रं क्रमेणैव वसुपत्रेषु विन्यसेत् ।
वस्वक्षरविभागेन चतुष्षष्ट्यर्णविग्रहम् ॥ ५०

भेरुण्डां विलिखेन्मन्त्री महाविषहरां प्रिये ।
भुवनेशीं समुच्चार्य तथा त्रिभुवनेति च ॥ ५१

विच्चे युगं कुले कौले कुसुकाले ततःपरम् ।
भेरुण्डे शिखिचालिख्य वाहिनि च ततःपरम् ॥ ५२

नीलकण्ठे च रौद्रे च ततो वेतालि सोम च ।
मातरं भुवनेशीं च चतुष्षष्टयर्णविग्रहम् ॥ ५३

छन्दोऽनुष्टुप् ऋषिर्ब्रह्मा बीजं तु भुवनेश्वरी ।
भेरुण्डा देवता ज्ञेया पुरुषार्थप्रदायिनी ॥ ५४

षड्दीर्घस्वरभेदेन बीजेनैव षडङ्गकम् ।
ध्यानं तु पूर्ववद्देवि पूजा चैव समा भवेत् ॥ ५५

महीबिम्बे मातृकाया वर्णा लेख्याः क्रमेण तु ।
तत्रावाह्य महेशानीमुपचारैः समर्चयेत् ॥ ५६

अङ्गानां पूर्ववत्पूजा त्रिकोणेषु ततःशृणु ।
शिखिनीं नीलकण्ठां च रौद्रीं चैव क्रमाद्यजेत् ॥ ५७

त्रिकोणपार्श्वयोः पूज्ये वेताली सोममातृका ।
ततस्त्रिभुवनेशानीं सिद्धां चैवाजितामपि ॥ ५८

लोकपूज्यां महामोहां कुलां कौलां तथैव च ।
कुसुकालामष्टपत्रे पुर आदि प्रपूजेत् ॥ ५९

ततश्च मातरः पूज्या वसुपत्रेषु मन्त्रवित् ।
इन्द्रादयस्तु भूबिम्बे पुनर्देवीं समर्चयेत् ॥ ६०

इति भेरुण्डानित्याविधिः ॥

ईश्वर उवाच —

श्रृणु देवि प्रवक्ष्यामि नित्यां वै वह्निवासिनीम्* ।
परां विलिख्य वह्न्यन्ते वासिन्यै नम इत्यपि ॥ ६१

अष्टार्णोऽयं महेशानि पुरुषार्थप्रदो मनुः ।
ऋषिरस्य वसिष्ठः स्यात् गायत्रं छन्द उच्यते ॥ ६२

आद्यन्ते बीजशक्ती स्यात् कीलकं मध्य एव च ।
देवीपदद्वयेनैव द्विरावृत्त्याङ्गकं न्यसेत् ॥ ६३

पदत्रयं देहभागत्रये विन्न्यस्य देशिकः ।
ध्यायेत्तप्तसुवर्णाभां नानालङ्कारभूषिताम् ॥ ६४

पाशाङ्कुशौ स्वस्तिकं च शक्तिं च वरदाभयौ ।
दधतीं रत्नमकुटां त्रैलोक्यतिमिरापहाम् ॥ ६५

वर्णलक्षं जपेन्मन्त्रं तद्दशांशेन होमयेत् ।
घृताक्तेन वरारोहे ततः सिद्धो भवेन्मनुः ॥ ६६

अष्टपत्रं लिखेत्पद्मं विद्यां प्रतिदले लिखेत् ।
एकैकाक्षरभेदेन ततो भूबिम्बमालिखेत् ॥ ६७

मध्यपीठं समभ्यर्च्य दिक्षु मध्ये च पार्वति ।
पीताश्वेतारुणा कृष्णा क्षुधा तीव्रा स्फुलिङ्गिनी ॥ ६८

रुचिरा ज्वालिनी चैव ततः सिंहासनं यजेत् ।
देवीमावाहयेत्तत्र सूपचारैः समर्चयेत् ॥ ६९

---

* वह्निवासिनीमनुस्वरूपम् – "ओं ह्रीं वह्निवासिन्यै नमः" इति ॥

आदावङ्गानि सम्पूज्य वसुपत्रेषु पूजयेत् ।
जातवेदाः सप्तजिह्वो हव्यवाहन एव च ॥ ७०

अश्वोदरभवश्चैव तथा वैश्वानरः प्रिये ।
कौमारतेजा देवेशि तथा विश्वमुखः क्रमात् ॥ ७१

ततो देवमुखो देवि वसुपत्रेषु पूजयेत् ।
ब्रह्मादयः सुसम्पूज्या वसुपत्रेषु देशिकः ॥ ७२

इन्द्रादयस्तु भूबिम्बे पुनर्देवीं समर्चयेत् ।
साक्षाद्वह्निमहापीठकलादशकमण्डिताम् ॥ ७३

इति श्रीवह्निवासिनीनित्याविधिः ॥

ईश्वर उवाच —

अथ वक्ष्ये महादेवि महाविद्येश्वरीं पराम् ।
नित्यक्लिन्नां समालिख्य मुखे तारं समालिखेत् ॥ ७४

हृल्लेखान्ते परामात्मा वह्निबीजं विसर्गवत् ।
चतुर्दशाक्षरी विद्या ऋषिर्ब्रह्मा निगद्यते ॥ ७५

गायत्रं छन्द आख्यातं देवता परमेश्वरी ।
आद्यन्ते बीजशक्ती च हृल्लेखा कीलकं भवेत् ॥ ७६

चतुष्कोणे च युग्मेन युग्मेन युगलेन च ।
युगलेन च युग्मेन न्यसेदङ्गानि देशिकः ॥ ७७

जपाकुसुमसङ्काशां रक्तांशुकविराजिताम् ।
पाशाङ्कुशौ कपालस्थसुरापानविघूर्णिताम् ॥ ७८

अभयं दधतीं ध्यायेत् चतुर्लक्षं जपेत्सुधीः ।
तद्दशांशेन जुहुयात् हविषा तिलतण्डुलैः ॥ ७९

त्रिकोणं वेदपत्रं च वसुपत्रं च भूगृहम् ।
एवं मण्डलमालिख्य मध्ये देवीं समर्चयेत् ॥ ८०

आदावङ्गानि सम्पूज्य त्रिकोणेषु प्रपूजयेत् ।
ब्रह्माणीं वैष्णवीं रौद्रीं ततो वेदास्त्रपूजनम् ॥ ८१

वेदमाता च हृल्लेखा योगिनी चन्द्रशेखरा ।
पुर आदिक्रमेणैव पूज्या वेदाश्रकेषु च ॥ ८२

नित्यां निरञ्जनां क्लिन्नां क्लेदिनीं मदनातुराम् ।
मदद्रवां द्राविणीं च क्षोभिणीं च स्वरैर्यजेत् ॥ ८३

मातरश्चैव सम्पूज्या भूबिम्बे लोकपालकाः ।
इति [1]श्रीमहाविद्ये(वज्रे)श्वरी नित्याविधिः ॥ ८४

**ईश्वर उवाच —**

अथ दूतीं प्रवक्ष्यामि त्रैलोक्याकर्षणक्षमाम् ।
भुवनेशीं समुच्चार्य शिवदूत्यै नमो लिखेत् ॥ ८५

सप्तार्णा [2]शिवदूतीयं त्रैलोक्यस्वामिनी प्रिये ।
ऋषिः रुद्रस्तु गायत्री छन्दः स्याद्देवता शिवा ॥ ८६

---

1. महाविद्ये(वज्रे)श्वरी नित्यामनुरेवम् —
   "ओं ह्रीं क्लिन्ने ऐं क्रों नित्यमदद्रवे ह्रीं ओं" इति ॥

2. शिवदूतीनित्यामन्त्रस्वरूपं तु—"ओं ह्रीं शिवदूत्यै नमः" इति ।

आद्यन्ते बीजशक्ती च मध्ये कीलकमुच्यते ।
विद्याभागत्रयेणैव द्विरावृत्त्याऽङ्गकं न्यसेत् ॥ ८७

दूर्वानिभां त्रिणेत्रां च महासिंहासमासनाम् ।
शङ्खारिचापबाणांश्च सृणिपाशौ वराभयौ ॥ ८८

दधतीं चिन्तयेन्नित्यं सप्तलक्षं जपेत्ततः ।
तद्दशांशेन जुहुयात् तिलैर्मधुघृताप्लुतैः ॥ ८९

अष्टपत्रं लिखेत्पद्मं बहिर्भूबिम्बमालिखेत् ।
तत्र देवीं समभ्यर्च्य सूपचारैः समर्चयेत् ॥ ९०

आदावङ्गानि सम्पूज्य वसुपत्रेषु पूजयेत् ।
जया च विजया चैव कीर्तिः प्रीतिः प्रभा तथा ॥ ९१

श्रद्धा मेधा धृतिश्चाष्टौ भूबिम्बे तु दिगीश्वराः ।
पुनर्देवीं समभ्यर्च्य सुखी भूयान्नरोत्तमः ॥ ९२

इति श्रीशिवदूतीनित्याविधिः ॥

ईश्वर उवाच –

अथ वक्ष्ये महादेवि त्वरितां सिद्धिदायिनीम् ।
तारं परां च कवचं ख(खे) च छे क्षे(क्षः) समालिखेत् ॥ ९३

स्त्रीं हुमात्मकमुच्चार्य क्षेपरामस्त्रकं लिखेत् ।
त्वरिता रुद्रवर्णेयं भोगमोक्षफलप्रदा ॥ ९४

ऋषिरीशो विराट् छन्दो देवतेयं च पार्वति ।
कवचं स्त्रीशक्तिबीजे कीलकं च प्रकीर्तितम् ॥ ९५

च क्षे युग्मं हृच्छिरस्तु छे क्षे युग्मं शिखा ततः ।
क्षः स्वीं युगं च कवचं स्वीं हुमात्मयुगं तथा ॥ ९६

नेत्राणि विन्यस्य हुं क्षे फडस्त्रं परिकीर्तितम् ।
श्यामाङ्गीं रक्तसत्पाणिचरणाम्बुजशोभिताम् ॥ ९७

वृषलाहिसुमञ्जीरां फटारत्नविभूषिताम् ।
स्वर्णांशुकां स्वर्णभूषां वैश्याहिद्वन्द्वमेखलाम् ॥ ९८

तनुमध्यां पीनवृत्तकुचयुग्मां वराभयौ ।
दधतीं शिखिपिच्छानि वलयाङ्गदशोभिताम् ९९

गुञ्जारुणां सुरत्नाढ्यकेयूरां रत्नभूषिताम् ।
द्विजनागस्फुरत्कर्णभूषां मत्तारुणेक्षणाम् ॥ २००

नीलकुञ्चितधम्मिल्लवनपुष्पाङ्कमालिनीम् ।
कैरातीं शिखिपत्राच्छनिकेतनविराजिताम् ॥ १०१

स्फुरत्सिंह्यासनप्रौढां स्मरेद्भूयविनाशिनीम् ।
रविलक्षं जपेन्मन्त्रं तद्दशांशेन होमयेत् ॥ १०२

मधूकपुष्पैर्देवेशि पुरश्चारी ततो भवेत् ।
अष्टपत्रं लिखेत्पद्मं बहिर्भूबिम्बमालिखेत् ॥ १०३

प्रत्येकं वसुकोणेषु कवचं चाष्टधा लिखेत् ।
मध्ये तु भुवनेशानीं वेष्टयेन्मातृकां बहिः ॥ १०४

सर्वरक्षाकरं नाम चक्रमेतदुदाहृतम् ।
तत्रावाह्य महेशानीमुपचारैः समर्चयेत् ॥ १०५

आदावङ्गानि सम्पूज्य वसुपत्रेषु पूजयेत् ।
हुङ्कारीं खेचरीं चण्डां छेदिनीं क्षेपणीमपि ॥ १०६

स्त्रियं हुङ्कारिणीं क्षेमकारिणीं क्रमतो यजेत् ।
श्रीबीजेनैव देवेशि लोकपालांस्ततः परम् ॥ १०७

अग्रे फट्कारिणी पूज्या शरासनधरा प्रिये ।
स्वर्णरत्नमयी वेत्रयष्टिहस्ते सुभूषिते ॥ १०८

द्वारपार्श्वयुगे पूज्ये विजया च जया तथा ।
कृष्णबर्बरकेशश्च लकुटेन विराजितः ॥ १०९

किङ्करः पुरतः पूज्यस्तद्बहिः पूजयेत्क्रमात् ।
मान्धातारं विधातारं पुनर्देवीं समर्चयेत् ॥ ११०

इति त्वरितानित्याविधिः[1] ॥

ईश्वर उवाच –

अथ वक्ष्ये महेशानि विद्यां श्रीकुलसुन्दरीम्[2] ।
बालाख्या त्रिपुरेशानी पूर्वसिंहासने स्थिता ॥ १११

ब्रह्मविष्णुमहेशानपूज्या सा कुलसुन्दरी ।
अथ वक्ष्ये परां नित्यां पुरुषार्थप्रदायिनीम् ॥ ११२

---

1. त्वरितादिमन्त्रस्वरूपं नित्योत्सवे —
ओं ह्रीं हुं खे च छे क्षः स्त्रीं हुं क्षें ह्रीं फट् इति त्वरितायाः ॥

2. ऐं क्लीं सौः इति कुलसुन्दर्याः ॥

त्रिपुरेशीं समुच्चार्य नित्याख्यां[1] भैरवीं तथा ।
हुङ्कारत्रितयं बाणविद्येयं वासवाक्षरी ॥ ११३

त्रिपुरेशीव तन्त्रं तु ऋष्यादियजनं प्रिये ।

इति नित्याद्वयविधिः ॥

ईश्वर उवाच —

अथ वक्ष्ये महेशानि विद्यां नीलपताकिनीम्[2] ॥ ११४

तारं हृत्पदमाभाष्य कामेश्वरि पदं ततः ।
कामाङ्कुशपदं चोक्त्वा ततः कामपताकके ॥ ११५

भगवत्यथ नीलान्ते पताकेति भगान्तिके ।
वति हृन्मन्त्रमालिख्य ततः स्त्रीति च ते लिखेत् (?) ११६

परमान्ते तथा गुह्ये हुङ्कारत्रितयं लिखेत् ।
मदने मदनान्ते च देहे त्रैलोक्यमालिखेत् ॥ ११७

आवेशयेति संलिख्य कवचास्त्राग्निवल्लभा ।
षष्टयर्णा परमेशानि देवी नीलपताकिनी ॥ ११८

कामेश्वरीव तन्त्रे तु ध्यानमस्या निगद्यते ।
रक्तां रक्तांशुकप्रौढां नानारत्नविभूषिताम् ॥ ११९

---

1. हसकलरडैं हसकलरडीं हसकलरडौः इति नित्यायाः ।

2. ह्रीं फ्रें स्त्रूं क्रों आं क्लीं ऐं ब्लूं नित्यमदद्रवे हुं फ्रें ह्रीं इति नीलपताकायाः ।

इन्द्रनीलस्फुरन्नीलपताकां कामलाञ्छिताम् ।
कण्ठग्रैवेयसंलग्नसृणिं च वरदाभयौ ।
दधतीं परमेशानीं त्रैलोक्याकर्षणक्षमाम् ॥ १२०

ध्यात्वा जपेच्चतुर्लक्षं दशांशेन तिलैर्हुनेत् ।
एषा विद्या वरारोहे पूज्या कामेश्वरी यथा ॥ १२१

इति नीलपताकिनीनित्याविधिः ॥

ईश्वर उवाच —

अथ वक्ष्ये महेशानि विजयां जयदां सदा ।
शिवचन्द्रखपाताग्निरुद्रस्वरविभूषिताम् ॥ १२२

बिन्दुनादकलाक्रान्तं विजयायै नमो लिखेत् ।
ऋषिरस्या अहं छन्दो गायत्रं देवता स्वयम् ॥ १२३

बीजं हृन्मध्यवर्णस्तु बीजशक्ती च कीलकम् ।
षड्दीर्घस्वरसम्भिन्नबीजेनैव षडङ्गकम् ॥ १२४

एकवक्त्रां दशभुजां सर्पयज्ञोपवीतिनीम् ।
दंष्ट्राकरालवदनां नरमालाविभूषिताम् ॥ १२५

अस्थिचर्मविशेषां तां वह्निकूटसमप्रभाम् ।
व्याघ्राम्बरां महाप्रौढां शवासनविराजिताम् ॥ १२६

रणे स्मरणमात्रेण भक्तेभ्यो विजयप्रदाम् ।
शूलं सर्पं चन्द्रकारिसृणिघण्टाशनिद्वयम् ॥ १२७

पाशमङ्कुशमभीतिं च दधतीं जयदां सदा ।
लक्षत्रयं जपेन्मन्त्रं तद्दशांशेन होमयेत् ॥ १२८

महापद्मैस्त्रिमध्वक्तैस्ततः सिद्धा भवेदियम् ॥ १२९

त्रिकोणं चैव षट्कोणं वसुपत्रं महीगृहम् ।
मध्ये बीजं समालिख्य त्रिकोणेषु च बीजकम् ॥ १३०

षडक्षराणि षट्कोणे वसुकोणेषु च स्वराः ।
युग्मयुग्मप्रभेदेन पत्राग्रेषु ततो लिखेत् ॥ १३१

नारसिंह्ममहाबीजं मातृकां वेष्टयेत्ततः ।
अत्रावाह्य महादेवीमुपचारैः समर्पयेत् ॥ १३२

आदौ षडङ्गावरणं त्रिकोणे पूजयेत्ततः ।
ब्रह्मविष्णुमहेशांश्च षट्कोणेषु ततो यजेत् ॥ १३३

षड्योगिनीरष्टपत्रे मातरः पूजयेत्क्रमात् ।
चतुरस्रे लोकपालाः पुनर्देवीं समर्चयेत् ॥ १३४

इति विजयानित्याविधिः ॥

ईश्वर उवाच —

अथ वक्ष्ये महेशानि नित्यां वै सर्वमङ्गलाम् ।
जीववारुणताराढ्यां सर्वान्ते मङ्गला पदम् ॥ १३५

ङेऽन्तं हृदयमालिख्य नवार्णा सर्वमङ्गला ।
ऋषिश्चन्द्रो महेशानि गायत्रं छन्द उच्यते ॥ १३६

देवीयं बीजशक्ती च बीजं हृद्द्वन्द्वमेव च ।
विद्याभागत्रयेणैव द्विरावृत्या षडङ्गकम् ॥ १३७

शुभ्रपद्मासनां रम्यां चन्द्रकुन्दसमुद्युतिम् ।
सुप्रसन्नां शशिमुखीं नानारत्नविभूषिताम् ॥ १३८

अनन्तमुक्ताभरणां स्रवन्तीममृतद्रवम् ।
वरदाभयशोभाढ्यां स्मरेत्सौभाग्यवर्धनीम् ॥ १३९

एवं ध्यात्वा जपेद्वर्णलक्षं विजितमन्मथः ।
तद्दशांशेन जुहुयाच्छुभ्रपद्मैर्घृतप्लुतैः ॥ १४०

अष्टपत्रं च भूबिम्बं तत्रावाह्य सुरेश्वरीम् ।
उपचारैः समभ्यर्च्य षडङ्गावरणं यजेत् ॥ १४१

अष्टपत्रेषु सम्पूज्या भूबिम्बे ककुबीश्वराः ।
पुनः सम्पूज्य बहुधा चन्द्रमण्डलवासिनीम् ॥ १४२

इति सर्वमङ्गलानित्याविधिः ॥

**ईश्वर उवाच —**

ज्वालामालां प्रवक्ष्यामि पुरुषार्थपरां (प्रदां) सदा ।
ओङ्कारबीजमुच्चार्य नमो भगवतीति च ॥ १४३

ज्वालामालिनि देवीति सर्वभूतसमालिखेत् ।
हारकारणके जातवेदसीति ज्वलेति च ॥ १४४

ज्वलयुग्म प्रज्वलेति युगं हूमात्मकं द्विधा ।
वह्नि द्विधा च कवचमस्त्रं चापि समालिखेत् ॥ १४५

चत्वारिंशद्वर्णरूपा च स्वर्णा च क्रमाद्भवेत् ।
ऋषिस्तु कश्यपश्छन्दो गायत्रं देवता त्वियम् ॥ १४६

रेफास्त्रे बीजशक्ती च कीलकं कवचं प्रिये ।
रविसूर्यशराशाष्टवेदैरङ्गानि विन्यसेत् ॥ १४७

चत्वारिंशद्दलं पद्मं चतुर्भिरधिकं शिवे ।
बहिरष्टदलं पद्मं बाह्ये भूबिम्बमालिखेत् ॥ १४८

कर्णिकायां महाविद्यां दलेषु क्रमतो लिखेत् ।
दुर्गावर्णास्ततो देवि वसुपत्रे स्वरान्लिखेत् ।
द्वन्द्वशः परमेशानि वह्निवर्णेन वेष्टयेत् ॥ १४९

पुनर्विद्यां च भूबिम्बे प्रादक्षिण्येन वेष्टयेत् ।
जातवेद च सेलिख्य सुनवाम च सोम च ॥ १५०

मरातीय च तो लिख्या निदहाति च वेद च ।
स नः परिषदति प्रोक्त्वा दुर्गाणीति समालिखेत् ॥ १५१

विश्वानावेवसिन्धुं च दुरितात्याग्निरालिखेत् ।
एषा दुर्गा वरारोहे जातवेदःस्वरूपिणी ॥ १५२

अस्मिन्यन्त्रे समासीनां ज्वालामालां* प्रपूजयेत् ।
आदौ पीठं समभ्यर्च्य दिक्षु पत्रे च शक्तिभिः ॥ १५३

जया च विजया भद्रकाली च सुमुखीत्यपि ।
दुर्मुखी च तथा व्याघ्रमुखी सिंह्ममुखी तथा ॥ १५४

---

* विजयादिनित्यादेवीनां मन्त्रस्वरूपमित्थं नित्योत्सवे —

भ म र य औं इति विजयायाः ॥

स्वौं इति सर्वमङ्गलायाः ॥ ओं नमो भगवति ज्वालामालिनि देवदेवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वल २ प्रज्वल २ ह्रां ह्रीं ह्रूं र र र र र र र ज्वालामालिनि हुं फट् स्वाहा इति ज्वालामालिन्याः ॥

दुर्गाश्चैताः सुसम्पूज्य देवीमावाह्य पूजयेत् ।
आदावङ्गानि सम्पूज्य ततो देवीं समर्चयेत् ॥ १५५

जाग्रती तपनी वेदगर्भा दहनरूपिणी ।
सेन्दुखण्डा शुभाढ्या तु हन्त्री नरमुखी तथा ॥ १५६

वागीश्वरी मन्दवाहा सोमरूपा मनोजवा ।
मरुद्वेगा च रात्रिश्च तीव्रकोपा यशोवती ॥ १५७

तोयात्मिका च नित्या च दयावत्यथ हारिणी ।
तिरस्क्रिया देवमाता तथा च मदनप्रिया ॥ १५८

समाराध्या नन्दिनी च तथा च रिपुमर्दिनी ।
षण्मुखी खण्डिनी तिग्मा दुर्गा गायत्रिका तथा ॥ १५९

निरवद्या विशालाक्षी वासोद्वाहा च नन्दिनी ।
वेदना वह्निगर्भा च वह्निवाहा तथैव च ॥ १६०

धुर्या च दुर्वहा चैव रिरंसा तापहारिणी ।
त्यक्तदोषा च सम्पन्ना पुर आदि प्रपूजयेत् ॥ १६१

अष्टारे मातरः पूज्या भूबिम्बे ककुबीश्वराः ।
पुनर्देवीं समभ्यर्च्य स्वर्णाभरणभूषिताम् ॥ १६२

उद्यद्विद्युल्लताकान्ति स्वर्णांशुकविराजिताम् ।
महासिंहासनप्रौढां ज्वालामालाकरालिनीम् ॥ १६३

अरिं शङ्खं खड्गखेटं त्रिशूलं डमरुं तथा ।
पानपात्रं च वरदं दधतीं संस्मरेद्यजेत् ॥ १६४

ज्वालामालामहाविद्या रिपुं हन्ति न संशयः ।

इति ज्वालामालिनीमहानित्याविधिः ॥

ईश्वर उवाच —

अथ वक्ष्ये महेशानि विचित्रां विश्वमातरम् ॥ १६५

यस्याः स्मरणमात्रेण पलायन्ते महापदः ।
*चकानुग्रहबिन्द्विन्दुभूषितं मनुमालिखेत् ॥ १६६

ऋषिर्ब्रह्मास्य मन्त्रस्य गायत्रं छन्द उच्यते ।
चित्रा च देवता बीजं ककारः कीलकं च तु ॥ १६७

तारानुजस्तु शक्तिः स्यात् पुरुषार्थप्रदायिनी ।
षड्दीर्घस्वरभेदेन न्यसेदङ्गानि देशिकः ॥ १६८

यन्त्रं तु मातृकायास्तु पूजा देव्यास्तथा भवेत् ।
मातरो लोकपालाश्च पूज्या देवि जपेद्बुधः ॥ १६९

रविलक्षं दशांशेन हुनेत्तिलघृतैर्यमी ।
स्तम्भने पीतवर्णेयं वश्ये बन्धूकसन्निभा ॥ १७०

मारणे श्यामलाङ्गीयमुच्चाटे धूमसन्निभा ।
शुभाङ्गी ज्ञानदा नित्यं विचित्रवसना सदा ॥ १७१

विचित्रभूषणा नित्यं विचित्रा कुङ्कुमोज्ज्वला ।
वरदाभयशोभाढ्या नानाशस्त्रधरा क्वचित् ॥ १७२

क्रमेण कथिता नित्या सर्वसौभाग्यदा प्रिये ॥ १७३

**इति श्रीदक्षिणामूर्तिसंहितायां नित्याविवरणं नाम त्रयोविंशः पटलः ॥**

---

* चकौं — कं बीजं ओं शक्तिः चं कीलकम् चकामित्यादिभिर्न्यासाः ।

## ॥ चतुर्विंशः पटलः ॥



ईश्वर उवाच —

एतत्सर्वात्मकं वस्तु त्रिपुरेत्यभिधीयते ।
एषा सत्वान्विता देवी जाग्रदित्यभिधीयते ॥ १

तदेयं शक्तिरूपा स्यात्सृजन्ती भुवनत्रयम् ।
उत्पत्तिर्जागरो बोधो व्यावृत्तिर्मनसः सदा ॥ २

कलाचतुष्टयं जाग्रदवस्थायां व्यवस्थिता ।
एषैव तमसा युक्ता शिवरूपा निगद्यते ॥ ३

स्मरणं विस्मृतिर्मूर्छा निद्रा च तमसावृता ।
सुषुप्तिश्च कला ज्ञेयाः सुषुप्तिः शिवरूपिणी ॥ ४

यदा द्वन्द्वात्मिका देवी रजोरूपोभयात्मिका ।
संयोगः सत्वतमसो रज इत्यभिधीयते ॥ ५

सुषुप्त्यन्ते जागरादौ स्वप्नावस्था रजोमयी ।
अभिलाषो भ्रमश्चिन्ता विषयेषु मनः स्मृतिः ॥ ६

कलाचतुष्टयं स्वप्नावस्थायां तु विधीयते ।
गुणातीता यदा देवी सा तुर्येत्यभिधीयते ॥ ७

सुषुप्त्यादौ जागरान्ते स्फुरत्तामात्रलक्षणा ।
अवस्थाशेषतां प्राप्ता तुर्या तु परमा कला ॥ ८

भावाभावविनिर्मुक्ता गुणातीता निगद्यते ।
वैराग्यं च मुमुक्षुत्वं शमादिविमलं मनः ॥ ९

सदसद्वस्तुनिर्धारस्तुर्यायास्तु कला इमाः ।
तुर्यैव परिपाकेन कला सप्तदशी भवेत् ॥ १०

चूतरम्भाफलादीनां पाकेन मधुरो रसः ।
एषा एव महेशानि कलासप्तदशी भवेत् ॥ ११

उच्चार्यमाणा ये मन्त्रास्ते मन्त्रा वाचिकाः स्मृताः ।
उच्चाररहितं वस्तु मनसैव विचिन्तयेत् ॥ १२

चिन्तनात्सामरस्येन साक्षाद् ब्रह्मैव केवलम् ।
अत एव महाविद्या तुर्यरूपा वरानने ॥ १३

कलाषोडशकं चैतच्छ्रीविद्यार्णेषु संस्थितम् ।
निःसरन्ति महामन्त्रा यथाग्नेर्विस्फुलिङ्गवत् ॥ १४

तथैव मातृका वर्णा निस्सृता वाग्भवात्प्रिये ।
अत एव तदेवास्या बीजं वाग्भवमुच्यते ॥ १५

तेनैव वाङ्मयेनासौ त्रैलोक्यं सचराचरम् ।
मोहयन्ती तदा देवि कामेशी बीजरूपिणी ॥ १६

पुरुषस्त्रीमयेनासौ स्फुरन्ती विश्वमातृका ।
महामोहेन देवेशि कीलयन्ती जगत्त्रयम् ॥ १७

अतस्तत्कीलकं देवि तेन सौभाग्यगर्विता ।
पालयन्ती जगत्सर्वं तेनेयं शक्तिरुच्यते ॥ १८

एवं कूटत्रयकला महासाम्राज्यदायिनी ।
तदा लक्ष्मीमयी देवी जागर्ति भुवनत्रये ॥ १९

महाकोशेश्वरीवृन्दमण्डिता भुवनेश्वरी ।
एषैव कोशसम्पन्ना कामान् पूरयते परा ॥ २०

कामेश्वरी तदा देवि कामान् पूरयते सदा ।
महासिह्मासनप्रौढा विश्वाधारस्वरूपिणी ॥ २१

अकथादिमहापीठा हक्षवर्णस्वरूपिणी ।
तदा कल्पलता देवि वाक्पुष्पज्ञानसत्कला ॥ २२

सौभाग्यदायिनी नित्यं रत्नतेजोविभूषिता ।
जीवानुग्रहसर्गेण स्फुरन्ती विश्वमातृका ॥ २३

चतुरायतनैर्वन्द्या चतुर्वेदनमस्कृता ॥
साम्ना चाभूत्तदा देवि भुवनानन्दमन्दिरा ॥ २४

अतस्त्रैलोक्यसाम्राज्यप्रदायिन्यात्मिका प्रिये ।
एतत्सर्वं पुरस्कृत्य वर्तते त्रिपुरेश्वरी ॥ २५

प्रपञ्चमध्ये देवेशि केवला ब्रह्मरूपिणी ।
अत एव महादेवि कला सप्तदशी भवेत् ॥ २६

षोडशार्णस्वरूपापि नित्या षोडशिकात्मिका ॥ २७

इति श्रीदक्षिणामूर्तिसंहितायां नित्याविवरणं नाम चतुर्विंशः पटलः ॥

## ॥ पञ्चविंशः पटलः ॥

श्रीपार्वत्युवाच —

त्रिपुरा परमेशानी सर्वमन्त्रमयी शिवा ।
संविद्रूपा तु कथिता कथं पूज्या सदाशिवा ॥ १



ईश्वर उवाच —

प्रातरुत्थाय शिरसि संस्मरेत्पद्ममुज्ज्वलम् ।
कर्पूराभं स्मरेत्तत्र श्रीगुरुं निजरूपिणम् ॥ २

सुप्रसन्नं लसद्भूषामण्डितं शान्तिभूषितम् ।
वराभयकरं नित्यं नमस्कृत्वाणुना यजेत् ॥ ३

हसमात्मकमालिख्य हसक्षमलवानिलान् ।
वह्नियुक्तान् त्रिधाऽऽलेख्य त्रिधा सम्भूष्य च स्वरैः ॥ ४

मुखवेष्टनवामाङ्गश्रुतिनेत्रेषु मण्डितैः ।
बीजत्रयमिदं भद्रे बिन्दुनादकलात्मकम् ॥ ५

श्रीपरान्ते पावकेति सर्वाराध्यपदं लिखेत् ।
सर्वमूर्ध पुरान्ते च नाथ सर्वगुरुस्त्वयम् ॥ ६

गुरु श्रीगुरुनाथान्ते रहसक्षमलाम्बुयान् ।
रेफदीर्घस्वरयुतान् बिन्दुनादकलात्मकान् ॥ ७

पिण्डीकृत्य लिखेदाद्यं चतुर्थं च ततो लिखेत् ।
तृतीयं पूर्ववल्लिख्य द्वितीयमपि पार्वति ॥ ८

ततः श्रीशम्भुगुर्वन्ते पुनराद्यं समालिखेत् ।
आद्यकूटचतुष्कान्ते चाद्यं तार्तीयमालिखेत् ॥ ९

वसुसङ्ख्यैश्च देवेशि चत्वारिंशद्भिरक्षरैः ।
मण्डितोऽयं मनुर्देवि स्मरेन्निजगुरोः प्रिये ॥ १०

मूलादिब्रह्मरन्ध्रान्तं बिसतन्तुतनीयसीम् ।
उद्यदादित्यरुचिरां स्मरेदशुभशान्तये ॥ ११

क्लीमात्मकं कामदेव सर्वान्ते जन चालिखेत् ।
प्रियाय हृदयान्तोऽयं मनुर्दन्तविशुद्धये ॥ १२

चतुर्लक्ष्म्यणुभिर्वक्त्रं क्षालयेत्सिद्धिहेतवे ।
स्नानकर्म ततः कुर्यान्मूर्धानं प्रोक्षयेत्तनुम् ॥ १३

सम्प्रोक्ष्य गुह्यमुद्राढ्यो मन्त्री पापनिकृन्तनः ।
आत्मविद्याशिवैस्तत्त्वैराचमेद्विद्यया त्रिधा ॥ १४

त्रिविधं तर्पणं कुर्याद्देवर्षिपितृपूर्वकम् ।
विद्ययाथ ततो मन्त्री सर्वालङ्कारभूषणः ॥ १५

रक्तवस्त्राङ्गरागस्तु रक्तासनगृहे स्थितः ।
विद्यया तत्त्वरूपिण्या त्रिराचम्याभिषेचनम् ॥ १६

विद्ययैव त्रिधा देवि चुलुकेनोदकं सुधीः ।
गृहीत्वा चिन्तयेत्तत्र हवनाद्यागतं प्रिये ॥ १७

वामकुक्षिस्थितं पापपुरुषं कज्जलप्रभम् ।
ब्रह्महत्या शिरो यस्य स्वर्णस्तेयकरं प्रिये ॥ १८

सुरापानहृदङ्गानि पातकानि बहून्यपि ।
उपपातकसङ्घास्तु रोमाणि परमेश्वरि ॥ १९

नानापातकसङ्घास्तु सर्वाङ्गाणि विचिन्तयेत् ।
खड्गचर्मधरं देवि मानसे चिन्तयेद्बुधः ॥ २०

भूमौ वज्रशिलां ध्यात्वा पातयेत्तत्र सुन्दरि ।
अथार्घ्यं रवये दद्यात् त्रिधा सौरमनुं स्मरन् ॥ २१

हृल्लेखा हृदयं देवि शिरो हंसस्तो भवेत् ।
वेदाक्षरी महाविद्या सर्वसौराधिदेवता ॥ २२

भास्वद्रत्नौघमुकुटस्फुरच्चन्द्रकलाधराम् ।
सद्यःसन्तप्तहेमाभां सूर्यमण्डलरूपिणीम् ॥ २३

वाक्कूटान्ते लिखेद्देवि वाग्भवेश्वरि विद्महे ।
द्वितीयकूटमुच्चार्य कामिनीश्वरी धीमहि ॥ २४

तृतीयकूटमुच्चार्य तन्नः शक्तिः प्रचोदयात् ।
यथाशक्ति जपं कुर्यात् श्रीविद्यां च ततो जपेत् ॥ २५

अथ यागगृहं यायादलक्तकविभूषितम् ।
विचित्रसुभगं भूमौ क्लृप्तं गोमयचर्चितम् ॥ २६

उपरिष्टाल्लसत्पुष्पसुभगं धूपधूपितम् ।
दीपमालावलीरम्यं विकीर्णकुसुमोज्ज्वलम् ॥ २७

तत्रागत्य यजेद्विद्वान् मौनी ज्ञानी सदा शुचिः ।
सर्वाभरणसम्पन्नस्त्रिपुरार्चनमण्डपम् ॥ २८

ङेऽन्तं नमोऽनेन पूजामण्टपस्य सुलोचने ।
गणपं क्षेत्रपालं च धातारं च विपूर्वकम् ॥ २९

गङ्गां च यमुनां चैव तथा शङ्खनिधिं क्रमात् ।
ततः पद्मनिधिं यष्ट्वा वास्त्वन्ते पुरुषं यजेत् ॥ ३०

द्वारे श्रियं गणेशं च पूजयेच्च सरस्वतीम् ।
देहलीमपि सम्पूज्य पूजयेद् द्वारमण्डले ॥ ३१

हृल्लेखां च श्रियो बीजं आदौ संयोजयेत्ततः ।
नामान्ते श्रीपदं वाच्यं पादुकां पूजयामि च ॥ ३२

अनेन क्रमयोगेन सम्पूज्याः सर्वमातरः ।
रक्तासनोपविष्टस्तु चक्रोद्धारं समाचरेत् ॥ ३३

शक्त्योपविष्टां शक्तिं तु विलिखेद्विस्तृतां सकृत् ।
वह्निनान्ते पुटीकुर्यात्सन्धिभेदक्रमेण तु ॥ ३४

अग्नीशासुरवायव्यरेखा विस्तार्य योजयेत् ।
दशकोणं यथा देवी जायते तद्वदेव हि ॥ ३५

मध्ये कोणचतुष्कस्य रेखा आकृष्य बुद्धिमान् ।
तत्तत्सन्धिविभेदेन मन्वस्रं जायते यथा ॥ ३६

समत्रिकोणशक्त्यैक्यं सुखदं नेत्रयोर्यथा ।
सश्रीकं सन्धिभेदेन ऋजुरेखाविजृम्भितम् ॥ ३७

बहिरष्टदलं पद्मं सुवृत्तेन समालिखेत् ।
तद्वत् षोडशपत्रं हि विलिखेत्पद्ममुत्तमम् ॥ ३८

सुवृत्तं परमेशानि ततो भूबिम्बमालिखेत् ।
चतुर्द्वारविशोभाढ्यं पुष्पं तत्र विनिक्षिपेत् ॥ ३९

गण्डकीभवपाषाणे स्वर्णे रजतताम्रयोः ।
काश्मीरदर्पणे भूर्जे चर्चापीठे लिखेद्बुधः ॥ ४०

शलाकया सुवर्णस्य मिश्रया कुसृणेन्दुभिः ।
सिन्दूररजसा मिश्रैः पटधातुमये लिखेत् ॥ ४१

अथवा भूतले देवि सुरेखां कुसुमेन वा ।
सिन्दूररजसा वापि लिखेत्सर्वार्थसिद्धये ॥ ४२

एतच्चक्रं महेशानि मध्ये बिन्दुविराजितम् ।
ततस्त्रिकोणं चाष्टारं दशारं च दशारकम् ॥ ४३

मनुकोणं महेशानि मध्यचक्रमिदं प्रिये ।
बैन्दवादष्टकोणान्तं सर्वमध्यं सुरेश्वरि ॥ ४४

चत्वारिंशद्भुगैर्बद्धं त्रिभागैरपि पार्वति ।
वसुपत्रं कलापत्रं चतुरस्रं समालिखेत् ॥ ४५

नवात्मकमिदं भद्रे नवयोन्यङ्कितं भवेत् ।
यथेष्टाशामुखो मन्त्री तत्तत्कर्मविधौ सुधीः ॥ ४६

प्राङ्मुखःसुखमासीनो गुरुं नत्वा निजं ततः ।
पूर्वोक्तमनुना सम्यग्गुरुनाम च संस्मरन् ॥ ४७

* आद्यद्वितीयावरणस्यास्त्रिपुरश्यति न लिखेत् (?) ।
आद्यद्वयं बिन्दुनादकलाढ्यं त्रिपुरा भवेत् ॥ ४८

---

* अत्र ४७ तमश्लोकात्परं दृश्यमानं पद्यं अशुद्धं दुरवगाहं च भाति । अतः श्रीचक्रलेखनपूरणार्थकतया पद्यमिदं अत्र योजनीयतया दीयते —

"आद्यद्वितीयावरणक्रमाद्यन्त्रं समालिखेत्" इति वा "एतद्यन्त्रं लिखेत् भक्त्या ध्यायन् देवीं परां शिवाम्" इति वा दीयते ।

There is no continuity from the verse No. 47 and 48.

पार्ष्णिघातकरास्फोटैरूर्ध्ववक्त्रस्तु मान्त्रिकः ।
खभूभूतानि सन्त्रास्य करशुध्यादिकं यजेत् ॥ ४९

तन्त्रमस्या महेशानि त्रिपुरेशीव नान्यथा ।
मध्यमादितलान्तं तु करशुद्धिं वियोजयेत् ॥ ५०

तत आत्मासनं दद्यात् सुन्दर्याः परमेश्वरि ।
वाग्भवं त्रिपुरेश्वर्या हित्वा तत्र विनिक्षिपेत् ॥ ५१

हृल्लेखां सुन्दरी नाम त्रिपुरेशीव पूजनम् ।
चक्रासनं ततो दद्यात् पुरवासिन्यधिष्ठितम् ॥ ५२

त्रिपुरेश्यास्त्रिबीजेषु हकारं योजयोत्प्रिये ।
पुरवासिन्यसौ भद्रे त्रिपुरेशीव पूजनम् ॥ ५३

त्रिपुरेशीहसाद्या स्यात् बीजयुग्मे तथान्तिमे ।
शिवाद्या श्रीरियं सर्वमन्त्रासनविधौ यजेत् ॥ ५४

सुन्दर्या अन्तिमं हित्वा बलेमात्मकमक्षरम् ।
संयोज्यमालिनी देवी साध्यसिद्धासनस्थिता ॥ ५५

तन्त्रमस्या महेशानि त्रिपुरेशीव सम्भवेत् ।
आत्मरक्षां प्रकुर्वीत त्रिपुरेश्या महेश्वरि ॥ ५६

सम्पत्प्रदा भैरवीयमन्ते सर्गसमन्विता ।
मूर्त्यावाहनविद्या तु सिद्धाम्बा परमेश्वरि ॥ ५७

सम्पत्प्रदा भैरवीव पूजनं परमेश्वरि ॥

॥ इति श्रीदक्षिणामूर्तिसंहितायां करशुद्ध्यादि (विवरणं नाम) चतुस्त्रिंशः पटलः ॥

## ॥ पञ्चविंशः पटलः ॥

ईश्वर उवाच –

शिवचन्द्रो मन्मथोरः शक्तिर्वै बिन्दुमालिनी ।
क्षमा बिन्द्वर्धमालाश्च नव वर्णा भवन्ति हि ॥ १

शिवाशून्यमयी देवी व्योमाकारेण संस्थिता ।
विश्वं स्वात्मनि चिद्रूपे वहन्ती सकलालया ॥ २

चन्द्रेण द्रावयन्तीयं मूलादिब्रह्ममन्दिरात् ।
आप्लावयन्ती सकलं सृजन्ती विश्वमातृका ॥ ३

मान्मथेन मनोरूपा तस्मात्तेजोमयी ततः ।
विस्तारयन्ती सकलं विश्वयोनिरितीरिता ॥ ४

अन्तःकरणवृत्त्या तु विश्वान्तर्मातृका भवेत् ।
अन्तर्मायेति विख्याता ययेदं धार्यते जगत् ॥ ५

अत एव क्षमारूपा जगद्धात्री परा भवेत् ।
एवं बैन्दवमासीना नादरूपा महेश्वरी ॥ ६

नादातीता विचारे तु विचारागोचरा ततः ।
एवं ब्रह्ममयैर्वर्णैर्महामन्त्रा भवन्ति हि ॥ ७

शुद्धाश्च शबला मन्त्रास्तथाचोभयसंज्ञकाः ।
शुद्धविद्यां शृणु प्रौढे सर्वाम्नायैर्नमस्कृताम् ॥ ८

कामाकाशौ शक्तितुर्यं भूमायावाग्भवं यजेत् ।
अनेन च विलिख्यन्ते विद्याः सर्वागमेश्वरी ॥ ९

मदनानुजहः कामे मदनाग्रज उच्यते ।
हित्वानुजं शिवं साग्रे विद्येयं मनुहृद्गता ॥ १०

कामः सहाग्रजो वाचि शिवं कामानुजं विना ।
सहाद्या मदने शक्तौ सहाद्यं कानुजं विना ॥ ११

चन्द्राराधितविद्येयं भुक्तिमुक्तिफलप्रदा ।
अनुजेन विना कामो हसादिर्वाग्भवे स्मरेत् ॥ १२

हसादिर्मदने शक्ते (शक्तौ) हसादि कानुजं विना ।
कुबेरादिधृता विद्या भुक्तिमुक्तिफलप्रदा । १३

हित्वा हं वाग्भवे कामे हसादिः कोमही मनुः ।
तुर्यैकादशमौ हित्वा शक्तिकूटेऽथ लिख्यते ॥ १४

कामानुजत्रयं हित्वा सहसाद्यो गजस्तथा ।
लोपामुद्रोपासितेयं भुक्तिमुक्तिफलप्रदा ॥ १५

इयं विद्या शक्तिकूटे महानादार्थसिद्धिदा ।
कामराजाराधितेयं भुक्तिमुक्तिफलप्रदा ॥ १६

एतस्या एव विद्यायाः शक्तिबिन्दुमलीद्वयम् ।
हित्वा हसादिर्गदिताऽगस्त्याराधितदेवता ॥ १७

धर्मार्थकाममोक्षाणामालयं सम्प्रदायतः ।
हित्वाद्ययुगलं चापि साद्यं कामेशिवादिकम् ॥ १८

शक्तिबिन्दुस्रजं त्यक्त्वा कामं तत्र विनिक्षिपेत् ।
शास्त्रागस्त्यस्य विद्येयं नन्द्याराधितदेवता ॥ १९

कानुजानां त्रयं युक्त्वा हसाद्यं वाचि मन्मथे ।
सहाद्यमन्ते सहयो मध्यैकः सूर्यपूजितः (?) २०

अगस्तिकूटत्रितयं सूर्यकामं समालिखेत् ।
पुनस्तत्कलमध्येऽम्शं तार्तीयं चाथ संलिखेत् ॥ २१

हसाद्यं विष्णुपूज्येयं षट्कूटा परमेश्वरी ।
अगस्त्याद्यं वाग्भवं स्यादेतदेव सकादिलम् ॥ २२

विष्णुविद्यापञ्चमं च स्कन्दाराधितदेवता ।
अगस्त्यस्य द्विधा विद्यां विलिख्य मनुवित्तमः ॥ २३

चतुर्थी पञ्चमीमायां त्येजेच्छिवहृदि स्थिता ।
वाग्भवस्थं चतुष्कं च कामराजस्थपञ्चकम् ॥ २४

शक्तिकूटत्रिकर्णं च कामराजस्य संलिखेत् ।
मायास्थानहरीवर्णयुगलं च क्रमालिलखेत् ॥ २५

दुर्वाससा पूजितेयं पुरुषार्थप्रदायिनी ।
एते द्वादशमन्त्राः स्युः शुद्धाः सर्वसमृद्धिदाः ॥ २६

अन्येऽपि शुद्धभेदास्तु कथ्यन्ते कृपया तव ।
भेदस्तु मनुविद्याया नास्ति सर्वागमेष्वपि ॥ २७

शिवचन्द्रकशक्तित्वहृल्लेखा वाग्भवे भवेत् ।
जीवेशा मदनैकारबिन्दुस्त्रक् पृथिवीपरा ॥ २८

एतत्कामे च तार्तीये द्वितीया चन्द्रपूजिता ।
कुबेरशक्तिकूटं च कामकूटं समालिखेत् ॥ २९

वाग्भवे कामराजे च शक्तिबीजमथालिखेत् ।
शिवकामेशशक्तीलपरा धनदपूजिता ॥ ३०

अपरेयं महाविद्या लोपामुद्रा च कथ्यते ।
अगस्त्यस्य महाविद्या कामराजः स एव हि ॥ ३१

अगस्त्यस्य महाविद्या सैवागस्त्यप्रपूजिता ।
विष्णुं रतिं वाचि कामेत्यादि कामस्य मन्मथम् ॥ ३२

सहयुग्मादिकामान्त्यशक्तौ नन्दीशपूजिता ।
भेदस्तु सूर्यविद्याया नास्त्येव परमेश्वरि ॥ ३३

विष्णुविद्यान्तरं वक्ष्ये कूटत्रयविराजितम् ।
शिवेशक्ष्मापरा वाचि कामे विष्णुश्च पञ्चमम् ॥ ३४

शक्तौ कामान्तिमं विद्या द्वितीया विष्णुपूजिता ।
हसशक्तीकभूमायाकूटमेतत्त्रिधा लिखेत् ॥ ३५

वाचि कामे तथा शक्तौ स्कन्दपूज्या परा भवेत् ।
अगस्त्यस्य मनोज्ञेयं परा वाचि हलां वग(परम्) ॥ ३६

कामे त्रयान्तभूजीवौ त्रिकूटा शिवपूजिता ।
एते भेदा वरारोहे शुद्धाः सिद्धिप्रदायकाः ॥ ३७

शुद्धभेदद्वयं वक्ष्ये भोगमोक्षफलप्रदम् ।
जीवेशकामभूमाया वाचि कामेऽपि संलिखेत् ॥ ३८

इदमेव पुनः शक्तौ विद्येयं शक्रपूजिता ।
कशक्तिबिन्दुमालाक्षाः शक्तिकूटं षडक्षरम् ॥ ३९

वाचि कामे महाकाशे क्ष्माकाशाग्निसमन्विता ।
शक्तौ हसकलाकाशवह्निमत्परमेश्वरि ॥ ४०

उन्मनी नाम विद्येयं केवलं मोक्षदायिनी ।
एते शुद्धाः सदा जप्ताः सिद्धिदा नात्रसंशयः ॥ ४१

अथ वक्ष्ये महेशानि मन्त्रान् शबलसंज्ञकान् ।
कामराजस्य बिन्दुस्रक् त्याज्य कामाक्षरं क्षिपेत् ॥ ४२

तत्रैव शक्रसम्पूज्या विद्येयं भुक्तिमुक्तिदा ।
कामराजस्य विद्याया मध्ये जीवं विनोच्चरेत् ॥ ४३

अन्त्ये जीवः शिवस्थस्तु विद्यावरणपूजिता ।
एतस्या एव विद्याया हित्वा बिन्दुस्रजं क्षिपेत् ॥ ४४

तत्रैव कामविद्येयं धर्मराजसुपूजिता ।
कसकक्ष्मादिहृल्लेखे हसलस्मरहक्षमा ॥ ४५

हृल्लेखा मन्मथे शक्तौ सकलाग्निमयी परा ।
वह्निना पूजिता विद्या महाऽविद्यौघघातकी ॥ ४६

अगस्त्यकूटयुगलं वह्निपूज्यान्तिमं लिखेत् ।
विद्या पन्नगराजेन पूजिता भुक्तिमुक्तिदा ॥ ४७

कशक्तिवह्नियुगलं भूवह्नी भुवनेश्वरी ।
हकलाग्नि हलामाया सरकक्ष्माग्निमण्डिता ॥ ४८

माया वा प्रतिपूज्येयं महापापौघभञ्जनी ।
के शक्तिर्वैन्दवी वह्निक्ष्मामाया हकहालरा ॥ ४९

माया सहकशक्राग्निमायेयं सौम्यपूजिता ।
कामाकाशक्षमामाया शिवकामहभूत्तरा ॥ ५०

मायाकामे शक्तिकूटे सकला भुवनेश्वरी ।
दशाना [दाशार्हा] धिष्ठिता विद्या सर्वकामप्रपूरणी ॥ ५१

कामराजस्य गुग्मान्ते जीवक्षमामादना परा ।
रत्याराधितविद्येयं सर्वकर्मार्थसाधिका ॥ ५२

कामाधिष्ठितविद्यान्ते विलोमान्तां समालिखेत् ।
नारायणाधिष्ठितेयं षट्पूष्टा परमेश्वरी ॥ ५३

कामाद्यं वाग्भवं कामे हकहक्षमा परा भवेत् ।
शक्तौ आगस्त्यवाक्कूटं विद्येयं ब्रह्मपूजिता ॥ ५४

अगस्त्यं वाग्भवं वाचि ब्रह्मविद्यान्तिमद्वयम् ।
जीवार्जिता महाविद्या सर्वकामप्रपूरणी ॥ ५५

एभिर्द्वादशभिर्भेदैः शबला परमेश्वरि ।
शुद्धाशुद्धा महाभेदा ज्ञातव्या परमेश्वरि ॥ ५६

विद्याः संलिख्य शुद्धास्तु विपरीतास्ततो लिखेत् ।
ता एव हि तदा शुद्धा यास्तु शुद्धा भवन्ति हि ॥ ५७

यावन्तः शुद्धभेदास्तु तावन्तस्ते क्रमात्प्रिये ।
तथैव शबलद्वन्द्वभेदा देवि भवन्ति हि ॥ ५८

*भेदाः सर्वेऽप्यमीशस्य मायया तुर्यसंज्ञकाः ।
ते ज्ञानगहना ब्रह्मरूपास्तु परमेश्वरी ॥ ५९

ज्ञातव्या गुरुवक्त्रेण त्वन्यथा नाशमाप्नुयात् ।
अथ वक्ष्ये महेशानि चतुर्धा ज्ञानमुत्तमम् ॥ ६०

---

* उपासकभेदेन श्रीविद्यामन्त्राणां वैविध्यं रुद्रयामलादि-तन्त्रान्तररीत्या एवम् :–

मनुं चन्द्रं कुबेरं च लोपामुद्रां च मन्मथम् ।
अगस्त्यं नन्दिकेशं च सूर्यं विष्णुं च षण्मुखम् ।

शिवं दुर्वाससं चादौ क्रमेणान्ते समर्चयेत् —

१ मनुनाराधिता – कसएईलह्रीं हकएईलह्रीं सकएईलह्रीं ॥
२ चन्द्रोपासिता–सहकएईलह्रीं हसकहएईलह्रीं हसकएईलह्रीं ।
३ कुबेरपूजिता हसकएईलह्रीं हसकहएईलह्रीं सहकएईलह्रीं ।
४ लोपामुद्रा – कएईलह्रीं हसकहलह्रीं सहसकलह्रीं ।
५ अगस्त्याराधिता – हसकलह्रीं हसकहलह्रीं सकलह्रीं ।
६ नन्दिनाराधिता – सएईलह्रीं सकहकलह्रीं सकलह्रीं ।
७ सूर्याराधिता – हसकलह्रीं सहकलह्रीं हकहसह्रीं ।
८ विष्णुनाऽऽराधिता – हसकलह्रीं सएकहलह्रीं सकलह्रीं सहकलह्रीं सहकहलह्रीं सहएकलह्रीं ।
९ षण्मुखोपासिता – हसकल हसकसकलह्रीं सहकहलह्रीं ।
१० शिवाराधिता – हसकलह्रीं हसकहलह्रीं सकलह्रीं ।
११ दुर्वाससोपासिता – कएईलह्रीं हकहलह्रीं सकहलह्रीं ।
१२ मन्मथाराधिता – कएईलह्रीं हसकहलह्रीं सकलह्रीं । इति । रुद्रयामलोक्ते त्रैलोक्यमोहनकवचे इतोऽप्यधिका श्रीविद्यामन्त्राः दृश्यन्ते । ते च अनुबन्धे द्रष्टव्याः ।

एकधा कथितं चैतत्प्रकारान्तरमुच्यते ।
यस्य स्मरणमात्रेण वाजपेयशतं भवेत् ॥ ६१

वक्ष्यमाणं बीजयुग्मं आदौ संयोज्य संस्मरन् ।
पराशरेश्वरेन्द्रादि द्वितीयो भेद उच्यते ॥ ६२

एतद्भेदादिसङ्ख्यस्तु तृतीयो भेद उच्यते ।
स्वयं ब्रह्मा महेशानि सकृदुच्चारणाद् बुधः ॥ ६३

अथ तुर्यप्रकारस्तु कथ्यते भुवि दुर्लभः ।
यस्य स्मरणमात्रेण पलायन्ते महापदः ॥ ६४

स्वयं ब्रह्मा स्वयं विष्णुः स्वयं रुद्रो न संशयः ।
किं पुनर्देवदेवेशि स्वयं कामेश्वरो विभुः ॥ ६५

अश्वमेधसहस्राणि वाजपेयस्य कोटयः ।
नरमेधसहस्राणि सकृदुच्चारणात्प्रिये ॥ ६६

काश्यादितीर्थयात्रास्तु प्रादक्षिण्यं भुवस्तथा ।
गङ्गास्नानसहस्राणि नामोच्चारनमन्त्रिणः ॥ ६७

किम्पुनर्देवि साक्षात्तु मन्त्री ब्रह्मा न संशयः ।
द्वितीयस्यादियुग्मं तु विपरीतं लिखेत् सुधीः ॥ ६८

कुलाम्बान्तर्मुखं कृत्वा विलिखेच्च ततः परम् ।
एतत्सम्पुटितां कुर्यात्तृतीयां परमेश्वरि ॥ ६९

श्रीविद्येयं समाख्याता वर्णितुं नैव शक्यते ।
जिह्वाकोटिशतैर्देवि कोटिवक्त्रशतैरपि ॥ ७०

पञ्चास्येन महादेवि वर्णितुं शक्यते कथम् ।
श्रीविद्या सर्वविद्यानां राज्ञी स्तोतुं न शक्यते ॥ ७१

षोडशाक्षरसम्पन्ना स्वयं सप्तदशी कला ।
श्रीगुरोःकृपया लब्धा निधिसिद्धिप्रदायिनी ॥ ७२

अन्ते निरामयं ब्रह्म मन्त्री भवति नान्यथा ।
ब्रह्महत्यासुरापानस्वर्णस्तेयादिपातकम् ॥ ७३

उपपातकलक्षाणि हन्ति श्रीस्मरणं क्षणात् ।
सर्वे कला न मन्त्रास्तु भवन्ति परमेश्वरि ॥ ७४

एकोनविंशदर्णा तु नारायणि हरिद्वयी ।
शिवविद्यां महेशानि विद्धि सप्तदशाक्षरीम् ॥ ७५

द्वन्द्वविद्यास्तु सकला एकोनविंशदक्षरा ।
नारायणी वैष्णवी च पञ्चविंशतिवर्णका ॥ ७६

ज्ञातव्या गुरुवक्त्रेण नान्यथा शापमाप्नुयात् ।
चतुःषष्टिः यतः कोटचो योगिन्यो मातृमण्डलात् ॥ ७७

विना गुरूपदेशेन साधकं नाशयन्ति हि ॥ ७८

**॥ इति श्रीदक्षिणामूर्तिसंहितायां श्रीविद्याविवरणं नाम चतुर्विंशः पटलः ॥**

## ॥ पञ्चविंशः पटलः ॥

ईश्वर उवाच —

श्रीविद्यामानसो भूत्वा वामभागे महेश्वरि ।
चतुरस्रं जलेनैव मण्डलं पूजयेत्प्रिये ॥ १

गन्धपुष्पाक्षतैस्तत्र यन्त्रिकां पूजयेत्तथा ।
शङ्खं तत्र च संस्थाप्य जलपूर्णं सहेतुकम् ॥ २

सम्यगभ्यर्च्य तेनैव पुरतो मण्डलं यजेत् ।
चतुरस्रं लिखेत्तत्र यन्त्रिकां स्थापयेत्सुधीः ॥ ३

त्रिकोणवृत्तषट्कोणमण्डलं पूजयेत्क्रमात् ।
गन्धादिभिर्चितं धूपधूपितं पात्रमुत्तमम् ॥ ४

यन्त्रिकायां प्रतिष्ठाप्य पूर्वोक्तं यन्त्रमालिखेत् ।
तथैव पूजयेत्कामकूटमुच्चार्य सुन्दरि ॥ ५

सूर्यपात्रमयं तत्र विशेषेण प्रपूजयेत् ।
भागत्रयं विशेषस्य भागमात्रं जलं क्षिपेत् ॥ ६

तत्रापि संलिखेत्पूर्वं यन्त्रपूजां च कारयेत् ।
त्रिकोणे पूरयेद्विद्यां तथा कोणत्रये ततः ॥ ७

कूटत्रयक्रमेणैव यथाविधि तथा विधिः ।
श्रीविद्याविधये देवि सम्पुटत्वेन पूजयेत् ॥ ८

सर्वत्रायं क्रमो देव्या नात्रालस्यं चरेत्प्रिये ।
देवीमूलषडङ्गानि क्रमेण परिपूजयेत् ॥ ९

शक्तिकूटं समुच्चार्य तज्जलं चन्द्ररूपकम् ।
सम्पूज्य मध्ये त्र्यस्रं तु मातृकात्मकमाचरेत् ॥ १०

पञ्चकोशमहाविद्याः संस्मरेत्तत्र सुन्दरि ।
तार्त्तीयं श्रीगुरोर्बीजं हंसविद्यामनुं यजेत् ॥ ११

वारत्रयं ततो देवि श्रीविद्यां सप्तधा यजेत् ।
स्पृष्ट्वार्घ्यकं ततो गन्धपुष्पाद्यैरर्चयेत्ततः ॥ १२

चिदानन्दमयं धाम नेत्रद्वयगतं स्मरेत् ।
प्रोक्षयेत्तेन सकलं पूजाद्रव्यान्तरं ततः ॥ १३

आत्मानमपि सर्वं तद् विद्यारूपं भवेत्प्रिये ।
अङ्गुष्ठानामिकाभ्यां तु वाममार्गेण सुन्दरि ॥ १४

तत्वमुद्रेयमाख्याता महापापनिकृन्तनी ।
अङ्गुष्ठतर्जनीभ्यां तु ज्ञानमुद्रेयमीरिता ॥ १५

अनया पुष्पपूजा स्यात् तथा तर्पणपूजने ।
भूतशुद्धिविधिं कुर्यात् मन्त्री देहस्य शुद्धये ॥ १६

वायुबीजेन देहस्य धातवः पापसंयुताः ।
संशोष्य वह्निबीजेन पापेन सहितं दहेत् ॥ १७

पापं विना पुनर्देहममृतीकृत्य जीवयेत् ।
जलबीजेन देवेशि पार्थिवेन स्थिरीकुरु ॥ १८

ततो देहस्य सन्नाहं सम्यङ्न्यासं समाचरेत् ।
करशुद्धिं पुरा कृत्वा चतुरासनदेवताः ॥ १९

पादयोर्जङ्घयोर्जान्वोर्मूलाधारे च विन्नयसेत् ।
कनिष्ठाङ्गुष्ठरहितैस्त्रिभिस्तु हृदि विन्नयसेत् ॥ २०

मध्यमानामिकाभ्यां तु न्यसेच्छिरसि मन्त्रवित् ।
अङ्गुष्ठेन शिखां न्यस्य दशभिः कवचं न्यसेत् ॥ २१

हृद्गतैर्नेत्रविन्यासं विन्यसेत्परमेश्वरि ।
तर्जनीमध्यमाभ्यां तु ततोऽस्त्रं विन्यसेत्प्रिये ॥ २२

आत्मरक्षाकरीं विद्यां द्विरुच्चार्य न्यसेद्बुधः ।
व्यापकत्वेन मूर्ति तु विन्यसेत्सिद्धिहेतवे ॥ २३

अथ वक्ष्ये महादेवि श्रीविद्यान्यासमुत्तमम् ।
सम्पूर्णां चिन्तयेद्विद्यां ब्रह्मरन्ध्रेऽरुणप्रभाम् ॥ २४

स्रवत्सुधाषोडशार्णां महासौभाग्यदां स्मरेत् ।
वामांसदेशे सौभाग्यदण्डिनीं संस्मरेत्ततः ॥ २५

रिपुजिह्वाग्रहां मुद्रां पादमूले विनिक्षिपेत् ।
त्रैलोक्यस्य त्वहं कर्ता ध्यात्वैवं तिलकं न्यसेत् ॥ २६

सम्पूर्णामेव वदने वेष्टनत्वेन विन्यसेत् ।
पुनः सम्पूर्णवदने गलोर्ध्वं विन्यसेत्तथा ॥ २७

पुनः सम्पूर्णया देहे वेष्टनत्वेन विन्यसेत् ।
व्यापकान्ते योनिमुद्रां मुखे क्षिप्त्वाऽभिवन्द्य च ॥ २८

त्रैलोक्यं क्षोभयत्याशु न्याससन्नद्धविग्रहः ।
मुष्टिं धृत्वोच्चलेन्मन्त्री तर्जनीं दण्डवत्ततः ॥ २९

सौभाग्यदण्डिनी नाम रिपून् दण्डयते क्षणात् ।
अङ्गुष्ठं मुष्टिगं कुर्याद्रिपुजिह्वाग्रहा भवेत् ॥ ३०

संयोज्य हस्तौ देवेशि तर्जन्याऽनामिकां यजेत् ।
तद्वद्वामेन संसृज्य योन्याकारेण योजयेत् ॥ ३१

परिभ्राम्यानामिकां तु मूर्धानं परितः प्रिये ।
ब्रह्मरन्ध्रे क्षिपेद्देवि मणिबन्धे न्यसेत्ततः ॥ ३२

ललाटेऽनामिकां कुर्यात् षोडशार्णां जपन् प्रिये ।
त्रैलोक्यमरुणं ध्यायन्न्यासः सम्मोहनाभिधः ॥ ३३

पादयोर्जङ्घयोर्जान्वोः कट्योरन्धुनि पृष्ठके ।
नाभौ पार्श्वद्वये चैव स्तनयोरंसयोस्तथा ॥ ३४

कर्णयोर्ब्रह्मरन्ध्रे च वदनेऽन्धुनि पार्वति ।
ततः कर्णप्रदेशे तु करवेष्टनयोः क्रमात् ॥ ३५

संहारोऽयं महान्यासो बीजैः षोडशभिर्न्यसेत् ।
गोलकं च ततः कुर्यात् त्रैलोक्यक्षोभकारकम् ॥ ३६

मातृकां विन्न्यसेत्पश्चात् गणेशग्रहरूपिणीम् ।
सकलाम्नायविद्याभिरङ्कितां विश्वमातरम् ॥ ३७

शिरोललाटभ्रूमध्यकण्ठहृन्नाभिगोचरे ।
आधारे व्यूहकं यावद्रहस्या योगिनीर्न्यसेत् ॥ ३८

ब्रह्मरन्ध्रेऽलिके नेत्रे श्रुतिघ्राणेऽष्टकेषु च ।
दन्ताधरे द्वयोर्देवि विजिह्वां चोरकूपके ॥ ३९

पृष्ठे सर्वाङ्गहृदयस्तनकुक्षिषु लिङ्गके ।
श्रीविद्यार्णैर्न्यसेद्देवि महासर्वसमृद्धये ॥ ४०

काननाक्षिश्रुतिघ्राणगण्डोष्ठेषु मुखान्तरे ।
नेत्रयोर्वदने वर्णान् न्यसेत्सौभाग्यहेतवे ॥ ४१

कसीमन्तललाटेषु भ्रूयुगे घ्राणवक्त्रयोः ।
करसन्धिषु साग्रेषु षोडशार्णान्क्रमान्न्यसेत् ॥ ४२

शिरोललाटभ्रूवक्त्रजिह्वापत्सन्धिकोटिषु ।
षोडशार्णान्न्यसेद्वक्त्रे स्वरस्थानेषु च क्रमात् ॥ ४३

ललाटे गलहृन्नाभिमूलाधारेषु पञ्चकम् ।
ब्रह्मरन्ध्रे मुखे स्वान्ते बीजत्रयमथो न्यसेत् ॥ ४४

आधारे हृदये ब्रह्मरन्ध्रे बीजत्रयं ततः ।
करपादेषु हृदये पञ्चबीजानि विन्न्यसेत् ॥ ४५

व्यापकं गोलकं कुर्यान्महासौभाग्यहेतवे ।
श्रीविद्यां हृदये देवि सम्पूर्णां विन्न्यसेत्सुधीः ॥ ४६

पुष्पैर्वानामया वापि मनसा वा न्यसेदणुम् ।
एवं विन्यस्तदेहः सन् मुद्राः सन्धारयेत्क्रमात् ॥ ४७

पूर्वोक्तयोनिमुद्रायाः पृथक् खण्डत्रयं कुरु ।
अङ्गुष्ठाभ्यां कनिष्ठाभ्यां मध्यमाभ्यां करेण तु ॥ ४८

त्रिखण्डानाम मुद्रेयं त्रिपुराह्वानकर्मणि ।
अनामाभ्यां कनिष्ठाभ्यां मध्यमे रोधयेत्ततः ॥ ४९

अङ्गुष्ठावनुजौ लग्नौ दण्डवत्तर्जनीद्वयम् ।
क्षभिणीयं महामुद्रा द्राविणीति निगद्यते ॥ ५०

एतस्या एव विद्याया (मुद्राया) मध्यमातर्जनीयुते ।
सर्वविद्राविणी नाम द्वितीया परिकीर्तिता ॥ ५१

एतस्या एव विद्याया (मुद्राया) तर्जनीमध्यमायुगम् ।
अङ्कुशाकाररूपेण योजयेत्परमेश्वरि ॥ ५२

त्रैलोक्याकर्षणी विद्या (मुद्रा) तृतीया परिकीर्तिता ।
पुटाकारौ करौ कुर्यात् तर्जन्यौ चाङ्कुशाकृती ॥ ५३

परिस्पृष्टक्रमेणाथ मध्यमे तदधोगते ।
क्रमेण तेन मनुवित्कनिष्ठानामिकाद्वयम् ॥ ५४

संयोज्य घर्षयेत्सर्वामङ्गुष्ठावग्रदेशगौ ।
सर्वावेशकरी मुद्रा चतुर्थी परमेश्वरि ॥ ५५

सम्मुखौ तु करौ योज्यौ मध्यमागर्भगेऽनुजे ।
तर्जनीभ्यां बहिर्मुक्ते अनामे सरले कुरु ॥ ५६

मध्यमानखदेशे तु ततोऽङ्गुष्ठौ च दण्डवत् ।
उन्मादिनी नाम मुद्रा पञ्चमी परिकीर्तिता ॥ ५७

क्रमेण पञ्चबाणास्तु मनवः परिकीर्तिताः ।
एतस्या एव मुद्रायास्तर्जन्यौ मध्यमानुजे ॥ ५८

कुर्यान्महाङ्कुशाकारौ मुद्रेयं तु महाङ्कुशा ।
अङ्कुशाख्यं महाबीजं मनुरस्याः प्रकीर्तितः ॥ ५९

वामदक्षिणबाहू तु दक्षिणं सव्यहस्तगम् ।
बाहुं कुर्यात्ततो देवि हस्तौ सङ्घर्षयेत्क्रमात् ॥ ६०

कनिष्ठानामिकाद्वन्द्वं मध्यमापृष्ठगं ततः ।
तर्जनीमध्यगं कुर्यात् उभयत्र महेश्वरि ॥ ६१

अङ्गुष्ठौ सरलौ कृत्वा पार्थिवे योजयेदिमाम् (?) ।
खेचरीयं महामुद्रा* त्रैलोक्यक्षोभकारिणी ॥ ६२

---

* मुद्रानवकक्रमः ग्रन्थान्तरे —

सङ्क्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशाः । खेचरी बीज-योन्याख्या नवमुद्राः प्रकीर्तिताः ।

कनिष्ठानामिके मध्ये योजिते पृष्ठपृष्ठके ।
अङ्गुष्ठौ सम्मुखौ योज्य तर्जन्यौ दण्डवत्सृजेत् ॥

एषा सङ्क्षोभिणीत्यन्या द्राविणी मध्यतर्जनी ।
द्राविण्या मध्यतर्जाग्रे अन्तराकुञ्चयेच्छनैः ॥

मुद्रैषाऽऽकर्षणी प्रोक्ता वश्याख्या च ततः परा ।
कनिष्ठेऽनामिके मध्ये स्वपृष्ठविवरे क्षिपेत् ॥

तलाभ्यां गृह्य तर्जाग्रे अङ्गुष्ठाग्रे नियोजयेत् ।
अङ्गुलयन्तः कनिष्ठे द्वे व्यत्यस्याकर्षयेच्छनैः ।-

ते मध्यमाभ्यामावेष्ट्य मध्याग्राङ्गुष्ठयोगतः ।
विरले सर्जयेत्तर्जंमुद्रैषोन्मादिनी मता ॥

विजयाद्यं महाबीजं मनुरस्याः प्रकीर्तितः ।
एषा समयमुद्रेव सर्वेषां परिकीर्तिता ॥ ६३

---

अस्यास्त्वनामतर्जाग्रे सम्मुख्याकुञ्चनात्ततः ।
एवं महाङ्कुशा मुद्रा खेचरी च ततः परा ॥

रज्ज्वाकारौ करौ कृत्वा योनिमुद्राग्रदेशतः ।
कनिष्ठे तर्जपृष्ठे च वृद्धाभ्यां योजयेच्छनैः ॥

कनिष्ठपृष्ठे मध्ये द्वे तयोः पृष्ठे त्वनामिके ।
अष्टमी बीजमुद्रैषा नवमी योनिरीरिता ॥

मिथः कनिष्ठिके बध्वा तर्जनीभ्यामनामिके ।
अनामिकोर्ध्वगश्लिष्टदीर्घमध्यमयोरधः ॥

अङ्गुष्ठाग्रद्वयं न्यस्येद्योनिमुद्रेयमीरिता ।

त्रिखण्डामुद्रा – हस्तद्वयाङ्गुलीः योनिमुद्रावद्बध्वा करतलद्वयस्य पृष्ठभागे कनिष्ठिकाद्वयमूर्ध्वीकृत्य अन्योन्यमामूलाग्रं संश्लेषयेत् । पुनरङ्गुष्ठद्वयमपि हस्ततलोपरि ऊर्ध्वीकृत्य अन्योन्यमामूलाग्रं संश्लेषयेत् । एषा त्रिखण्डामुद्रा । अस्या देव्यावाहनकालेऽपि विनियोगः ।

अनया त्रिपुरसुन्दर्यावाहने त्रिखण्डरूपाङ्गुलीषु तिसृष्वपि पुष्पत्रयं निधाय विद्यात्रिखण्डस्य मध्ये एकैकखण्डजपपूर्वकं एकैकखण्डस्थं पुष्पं चक्रमध्ये विनिक्षिपेत् ।

परिस्पृष्टौ करौ देवि त्वर्धचन्द्राकृती ततः ।
तर्जन्यङ्गुष्ठयुगलं युगपत्कारयेदथ ॥ ६४

अधः कनिष्ठावष्टब्धे मध्यमे च तु योजयेत् ।
अनामिके च कुटिले सर्वाधस्तान्नियोजयेत् ॥ ६५

बीजमुद्रेयमाख्याता मनुरस्या हि सौमिति ।
पूर्वोक्ता योनिमुद्रा तु नवमी परिकीर्तिता ॥ ६६

शक्तिदण्डस्फुरन्तीयं तस्मात्साधारणी भवेत् ।
वाग्भवं मनुरेतस्या अतो विश्वस्य मातृका ॥ ६७

**इति श्रीदक्षिणामूर्तिसंहितायां यजनन्यास (मुद्रानवक) विवरणं नाम**

**पञ्चविंशः पटलः ॥**

# ॥ षड्विंशः पटलः ॥

ईश्वर उवाच —

श्रीखण्डरक्तश्रीखण्डश्रीपर्णीसम्भवे पुटे ।
चक्रं संस्थापयेद्देवि नान्यत्र परमेश्वरि ॥ १

एवं विन्यस्तदेहः सन् ध्यायेद् ब्रह्माण्डमण्डलम् ।
क्षित्यम्बुपावकाकाशवायुरूपप्रकाशकम् ॥ २

चतुरस्रं च कोदण्डं त्रिकोणं तत्पुटे मुखम् ।
निरालम्बं इति ख्यातमेतद्वै मेरुमण्डलम् ॥ ३

तस्योर्ध्वं व्यापकं चक्रं वौषट्कपदजृम्भितम् ।
लीना वाग्वस्तुनिर्देशादपरा योगिषु स्मृता ॥ ४

परा श्रीशम्भवज्ञाने वानस्पत्येषु मध्यमा ।
सर्वजन्तुषु पश्यन्ती वैखरी ज्ञानयोगिषु ॥ ५

एवं वाक्पदसम्पन्नसहस्रदलनीरजम् ।
एतस्योर्ध्वं परं चक्रं परपीयूषमन्दिरम् ॥ ६

चतुरस्रं द्व्यष्टपत्रं चतुष्षष्टिदलं शुभम् ।
शतपत्रं सहस्राराायुतारं लक्षपत्रकम् ॥ ७

कोटिपत्रं सुशोभाढ्यं दीप्यमानं नभःस्थले ।
तत्कर्णिकामध्यपीठे संस्मरेच्चक्रनायकम् ॥ ८

महाषडध्वजननं स्फुरन्तं सर्वतोमुखम् ।
षडध्वरूपमधुना शृणु योगेषु साम्प्रतम् ॥ ९

पदाध्वा चक्रपत्रेषु भुवनाध्वा त्रिसन्धिषु ।
वर्णाध्वा मातृकापीठे सर्वमन्त्रविजृम्भिते ॥ १०

षट्त्रिंशत्तत्त्वभरितं चक्रं मूलार्णरूपतः ।
पञ्चसिंहासनोन्नद्धः कलाद्वा(ध्वा) चक्रशासनात् ॥ ११

नवधाचक्रभरितां तथान्त्यपरया युताम् ।
षोडशार्णस्वरूपा च चक्रं व्याप्य विजृम्भिते ॥ १२

मन्त्राध्वेति तदाख्यातः नीरजायतलोचने ।
एवं षडध्वसञ्चारि श्रीचक्रं परिचिन्तयेत् ॥ १३

कर्णिकायां परं वस्तु तत्र चैतन्यमक्षरम् ।
तत्र स्वात्मपदं तत्र स्फुरणं बैन्दवं ततः ॥ १४

तत्र स्वरूपममलं तत्र सत्वादिसम्भवः ।
चैतन्याकाशपीठं तु स्वात्मकान्यनुशासनात् ॥ १५

स्फुरणाद्वल्लरीपीठं सुधापीठं तु बैन्दवात् ।
स्वरूपाद्रत्नपीठं तु तत्वाद्विश्वं प्रकीर्तितम् ॥ १६

श्रीविद्यापूजनस्थाने चक्रपूर्वादितः प्रिये ।
महाकोशेश्वरीबृन्दमण्डितासनसंस्थिता ॥ १७

सर्वसौभाग्यजननीपादुकां पूजयामि च ।
इत्युच्चार्य परंज्योतिःकोशाम्बां पूजयेत्सुधीः ॥ १८

अनेनैव प्रकारेण पूजयेत्पञ्चपञ्चिकाम् ।
एतत्सर्वात्मकं वस्तु सुलीनं परवस्तुनि ॥ १९

तत्सर्वं स्वात्मसंवित्तिः सर्वसौभाग्यसुन्दरी ।
बिन्दुत्रयसमायोगात् त्रिबिन्दौ त्रिपुरा स्थिता ॥ २०

बिन्दुं सङ्कल्पयेद्वक्त्रं तस्याधस्तात्कुचद्वयम् ।
तदधस्त्वपरार्धं च चिन्तयेत्तदधोमुखम् ॥ २१

एवं कामकलारूपा साक्षादक्षररूपिणी ।
बिन्दुत्रयार्धमात्राभिः केवलं विश्वमातृका ॥ २२

तत्तस्मात्कारणाद्देवी त्रिपुरा शक्तिरुच्यते ।
अन्यासां त्रैपुरं बिन्दुत्रयं नास्त्येव शास्त्रतः ॥ २३

तदिच्छया भवेत्सृष्टिर्लयं तत्रैव गच्छति ।
सैव देवी महेशानी स्वात्मानमिति चिन्तयेत् (?) २४

औजापुरमतङ्गाख्याभापीठोपरि संस्थिते ।
तिथिसङ्ख्याफणाहीन्द्रमध्यमौलिसरोरुहे ॥ २५

तत्रस्थे बैन्दवे पीठे तत्र नित्यकलाम्बुजे ।
तत्र कामेश्वरीपीठे निषण्णां सहधर्मिणीम् ॥ २६

आज्ञालोकत्रयेशानीं ब्रह्मविष्ण्वीशशासनीम् ।
अकारादिक्षकारान्तवर्णावयवसुन्दरीम् ॥ २७

मूलादिब्रह्मरन्ध्रान्तं बिसतन्तुतनीयसीम् ।
उद्यत्सूर्यसमाभासां जपाकुसुमसन्निभाम् ॥ २८

सद्यस्सन्तप्तहेमाभां दाडिमींकुसुमोज्ज्वलाम् ।
सुगन्धोद्दामकुसुमपूर्णधम्मिल्लराजिताम् ॥ २९

तनुकेतकसंराजन्नीलभ्रमरकुन्तलाम् ।
भङ्गरेखास्फुरन्मुक्तामाणिक्यतिलकोज्ज्वलाम् ॥ ३०

स्फुरद्रत्नावलीरम्यां मुकुटोज्ज्वलकिङ्किणीम् ।
अलक्तकस्फुरच्चन्द्रवदनां विद्रुमाधराम् ॥ ३१

राजच्चन्द्रकलास्फूर्तितिलकां चापसद्भ्रुवाम् ।
कर्णचुम्बिस्फुरन्नीललोलाक्षिक्षेपसुन्दरीम् ॥ ३२

हारमुक्तावलीराजत्स्वर्णताटङ्कराजिताम् ।
कर्णभूषणतेजोभिः कपोलस्थलमञ्जरीम् ॥ ३३

मुखचन्द्रोज्ज्वलच्छुक्राकारमौक्तिकनासिकाम् ।
स्मितमधुर्यविजितब्रह्मविद्यारसप्रभाम् ॥ ३४

राजद्विद्रुमवल्ल्याभबाहुवल्लीविराजिताम् ।
रक्तोत्पलदलाकारसुकुमारकराम्बुजाम् ॥ ३५

कराम्बुजनखज्योत्स्नावितानितनभस्स्थलाम् ।
सुवृत्तनिबिडोत्तुङ्गकुचभारालसां शिवाम् ॥ ३६

वनमुक्तामहाहारपदकोन्नतवक्षसम् ।
शातोदरीं निम्ननाभिं क्षाममध्यमसुन्दरीम् ॥ ३७

अनर्घरत्नघटितमेखलालग्नकिङ्किणीम् ।
नितम्बबिम्बसुभगां रोमराजीविराजिताम् ॥ ३८

रक्तांशुकस्फुरत्तेजोव्याप्तत्रैलोक्यमण्डलीम् ।
दिव्यकञ्चुकसम्राजद्रत्नचित्रविचित्रिताम् ॥ ३९

कदलीललितस्तम्भसुकुमारोरुराजिताम् ।
नवरत्नस्फुरत्तेजोमञ्जरीव्याप्तदेहकाम् ॥ ४०

ब्रह्मविष्णुमहेशानस्फुरन्मौलिपदाम्बुजाम् ।
कर्पूरशकलोन्मिश्रताम्बूलापूरिताननाम् ॥ ४१

प्रवालवल्लीघटितपाशक्षौमगुणान्विताम् ।
द्वितीयाचन्द्ररेखां तु भालेनाकर्षणक्षमाम् ॥ ४२

सद्दीप्त्या भ्रमरीभूत गुणमिक्षुशरासनम् ।
कमलाकारसंराजत्पञ्चबाणांश्च बिभ्रतीम् ॥ ४३

महामृगमदोद्दामकुङ्कुमारुणविग्रहाम् ।
सर्वाभरणशोभाढ्यां सर्वालङ्कारराजिताम् ॥ ४४

सर्वदेवमयीं देवीं सर्वाधारस्वरूपिणीम् ।
सर्वसौभाग्यजननीं सर्वसौभाग्यसुन्दरीम् ॥ ४५

सर्ववर्णमयीं देवीं सर्वविद्यास्वरूपिणीम् ।
एवं ध्यायेन्महादेवीं कदम्बवनमध्यगाम् ॥ ४६

वहन्नाडीपुरद्वारेणागतां चिन्तयेत्ततः ।
कामेश्वरीं शिवस्याङ्के स्थापयेत्कुलसुन्दरीम् ॥ ४७

विद्यया ज्ञानरूपिण्या मुद्रया च तथा प्रिये ।
मुद्राः सन्दर्शयेद् विद्वांस्तर्पणं च त्रिधा यजेत् ॥ ४८

सर्वोपचारैराराध्य मानसैःप्रकटैः शुभैः ।
धूपदीपैर्नैवेद्यान्तैः पुनर्मुद्रास्तु दर्शयेत् ॥ ४९

पुनः सन्तर्प्य देवेशीं तिथिनित्यां प्रपूजयेत् ।
एतस्मिन्त्समये देवि तत्तत्तिथिमयीं यजेत् ॥ ५०

प्रतिपत्पौर्णमास्यन्तमेकैकां पूजयेत्तु यः ।
सौभाग्यं लभते मन्त्री महदैश्वर्यमाप्नुयात् ॥ ५१

एकादिवृध्या हान्या च दर्शान्तं क्रमतो यजेत् ।
विभाव्य च महाव्यस्तं स्वरैः पञ्चदशात्मकैः ॥ ५२

पञ्च पञ्च विभेदेन सर्वान्त्यं मध्यमं यजेत् ।
मध्ये मायामये देवीं महानित्यां प्रपूजयेत् ॥ ५३

कामेश्वर्यादिका नित्याः विचित्रान्ताः क्रमाद्यजेत् ।
विमलायजने मध्ये पूजयेद्गुरुमण्डलम् ॥ ५४

पराख्या दिव्यगुरवः सिद्धा देवि परापराः ।
अपरा मानवा ज्ञेया मुनिवेदाष्टसंख्यया ॥ ५५

आनन्दनाथ शब्दान्ताः पुरुषाः परिकीर्तिताः ।
अम्बान्ता गुरवो ज्ञेयाः स्त्रीलिङ्गाः परमेश्वरि ॥ ५६

कामराजस्य गुरवः कथ्यन्ते शृणु सुन्दरि ।

कादिक्रमेः —

परप्रकाशसंज्ञश्च ततः परशिवो गुरुः ॥ ५७

परशक्तिश्च कौलेशः शुक्लदेव्यम्बिका तथा ।
कुलेश्वरस्तथा देवि कामेश्वर्यम्बिका गुरुः ॥ ५८

अथ भोगस्तथा क्लिन्नः सहजः समयस्तथा ।
गगनो विश्वविमलौ मदनो भुवनो गुरुः ॥ ५९

लील: स्वात्मप्रियो देवि क्रमेण परिकीर्तिता: ।

**हादिविद्याक्रमे :–**

लोपामुद्रागस्त्ययोश्च पारम्पर्य: समो भवेत् ॥ ६०

परमाद्य: शिव: पश्चात् कामेश्वर्यम्बिका तत: ।
दिव्यौघश्च महौघश्च सर्वे[1] च गुरव: क्रमात् ॥ ६१

प्रज्ञादेवी प्रकाशस्तु चतुष्कं कथ्यते शृणु ।
दिव्यश्चिच्चैव कैवल्यो देव्यम्बा[2] च महोदय: ६२

चिद्विश्वशक्तिश्चरक:[3] कमलश्च मनोहर: ।
पर: स्वात्मगुरुद्वन्द्वं प्रतिभोऽष्टौ तु मानवे ॥ ६३

अन्यासां सर्वविद्यानां समानगुरव: क्रमात् ।

**मन्वादिविद्यायां गुरुक्रम: –**

अथो परप्रकाशश्च परादिर्विमृशस्तथा ॥ ६४

तृतीया परमेशानि कामेश्वर्यम्बिका तत: ।
मोक्षश्चामृतसंज्ञश्च[4] पुरुषोऽघोर एव च ॥ ६५

[5] अथ वाम:सद्गुरुश्च सिद्धौघश्चान्तिम: क्रमात् । (?)
उद्भव:परमश्चैव सर्वज्ञ:स्वच्छ एव च । ६६

---

1. सर्वानन्द नाथ:. 2. अनुदेव्यम्बा । एतदनन्तरं सिद्धानन्दनाथ इति नित्योत्सवे दृश्यते । अस्य पाक्षिकत्वं च तत्रैवोक्तम् ।
3. रामानन्देति नित्योत्सवे ।
4. अमृतानन्दनाथात्परं सिद्धानन्दनाथ: क्वाचित्क: इति उल्लेख: नित्योत्सवे दृश्यते ।
5. नित्योत्सवे प्रकाशानन्द सदानन्द सिद्धौघानन्द, उत्तमानन्द चतुष्कं सिद्धौघनिविष्टं दृश्यते ॥

सिद्धस्तथा च गोविन्दः शङ्करो मानवौघकाः ।
ओघत्रयावसाने तु स्वगुरुत्रितयं यजेत् ॥ ६७

यद्वा द्वादश सङ्ख्याता गुरवस्तु भवन्ति हि ।
मानवौघश्च कौते तु (तु) पुष्पं सङ्कोचयेत्तदा ॥ ६८

गुरुत्रयं सदा योज्यमन्यथा नष्टसन्ततिः ।
जातो मन्त्री तदा देवि पङ्क्त्यर्हो न भवत्यसौ ॥ ६९

अन्यथा गुरुसङ्कोचो न कर्तव्यः कदाचन ।
पारम्पर्यविहीना ये ज्ञानमात्रेण गर्विताः ॥ ७०

तेषां समयलोपेन विकुर्वंति मरीचयः । (?)
गुरुं विना क्रमं यस्तु कुरुते परमेश्वरि ॥ ७१

महाहानिस्तस्य देवि जायते नात्र संशयः ।
ओघत्रयेण गुरवः सम्पूज्याः सिद्धिहेतवे ॥ ७२

गुरुमन्त्रेण नाम्नापि निजं सम्पूजयेद्गुरुम् ।

॥ इति श्रीदक्षिणामूर्तिसंहितायां ध्यानादियजनविधिर्नाम षड्विंशः पटलः ॥

## ॥ सप्तविंशः पटलः ॥



ईश्वर उवाच —

अथ वक्ष्ये महेशानि श्रीविद्याक्रममुत्तमम् ।
अग्नीशासुरवायव्यमध्यदिक्ष्वङ्गपूजनम् ॥ १

स्वस्वमुद्राक्रमेणैव पूजयेन्मनुवित्तमः ।
भूबिम्बं षोडशारं च वसुपत्रं क्रमेण च ॥ २

सृष्टिचक्रं भवेत्तत्र पूजनं कथ्यते प्रिये ।
श्रीपरञ्ज्योतिराद्याश्च सर्वाः सम्पूजयेत्क्रमात् ॥ ३

मन्वस्रं दशकोणं च द्वितीयं दशकोणकम् ।
स्थितिचक्रं पूजनं तु विभेदेन यजेत्तथा ॥ ४

अष्टकोणं त्रिकोणं च बैन्दवं संहृतिर्भवेत् ।
तृतीयाः सकलाः पूज्या अनाख्यं सकलं भवेत् ॥ ५

तुर्या विद्यास्तु सकलाः पूजयेत्क्रमतः सुधीः ।
अनेनैव प्रकारेण विद्यावृन्दं प्रपूजयेत् ॥ ७

श्रीकोशसिंहासनगं तथा कल्पलतात्मकम् ।
तथा रत्नात्मकं देवि चतुरायतनात्मकम् ॥ ७

चतुरन्वयगम्भीरं सर्वं सम्पूजयेत्सुधीः ।
त्रैलोक्यमोहने चक्रे पञ्चाशद्वर्णविग्रहे ॥ ८

प्रकटास्तत्र सम्पूज्याः सिद्धये दश सुन्दरीः (?) ।
सद्यः सन्तप्तहेमाभाः पाशाङ्कुशधराः प्रिये ॥ ९

महाभाण्डाररत्नानि ससुवर्णानि वै निधीन् ।
प्रयच्छन्त्यः(न्तीः) साधकेभ्यः पद्महस्तास्तु पूजयेत् ॥ १०

अणिमालघिमासिद्धिमहिमेशित्वरूपिकाः ।
वशित्वसिद्धिः प्राकाम्या भुक्तिरिच्छाष्टमी भवेत् ॥ ११

प्राप्तिसिद्धिः सर्वकामसिद्धयः(श्च) प्रकटा यजेत् ।
द्वारदक्षिणभागे तु तथा कोणेषु च क्रमात् ॥ १२

अत ऊर्ध्वं क्रमात्पूज्याः पश्चिमादिषु देशिकैः ।
ब्राह्मी माहेश्वरी चैव तथेन्द्राणी तृतीयके ॥ १३

कौमारी वैष्णवी चैव षष्ठी वाराहिका भवेत् ।
चामुण्डा च महालक्ष्मीरपरेण च भागतः ॥ १४

पाशाङ्कुशधराः सर्वाः क्रमेण दधतीः स्मरेत् ।
विद्यां त्रिशूलं वज्रं च शक्तिं चक्रं गदां ततः ॥ १५

* वैर्यन्त्रमालिकां पद्मं क्रमेण परमेश्वरि ।
सर्वाभरणसम्पन्नाः संस्मरेत्सिद्धिहेतवे ॥ १६

पश्चिमादिक्रमेणैव प्रकटाश्चतुरस्रके ।
सर्वाशापूरके चक्रे कलास्वरविजृम्भिते ॥ १७

पश्चिमादिविलोमेन गुप्ताः सम्पूजयेत्क्रमात् ।
[1]कामाद्याकर्षणीं नित्यां [2]बुद्ध्याकर्षणिकां तथा ॥ १८

[3]अहङ्कारकर्षणीं च [4]शब्दाकर्षणिकां तथा ।
[5]स्पर्शाकर्षणिकां तद्वद् [6]रूपाकर्षणिकां तथा ॥ १९

---

* वैरिणां अन्त्राणि तेषां मालिकाम् इति चामुण्डाधृताभरणवर्णनम् ।

[7]रसाकर्षणिकां देवि [8]गन्धाकर्षणिकां तथा ।
[9]चित्ताकर्षणिकां तद्वत् [10]धैर्याकर्षणिकां प्रिये ॥ २०

[11]नामाकर्षणिकां चैव [12]बीजाकर्षणिकां तथा ।
[13]अमृताकर्षणीं चैव [14]स्मृत्याकर्षणिकां प्रिये ॥ २१

[15]शरीराकर्षणीं नित्यां [16]आत्माकर्षणिकां ततः ।
एता नित्याः कला देवि चन्द्रमण्डलमध्यगाः ॥ २२

स्वरलग्नाः स्मरेन्नित्यं स्मरत्पीयूषवर्षिणीः ।
पाशाङ्कुशसुधापूर्णकाश्मीरघटदानदाः ॥ २३

सर्वसङ्क्षोभणे चक्रे कादिळक्षान्तवर्गिणीः ।
देवि गुप्ततराः पूज्या बन्धूककुसुमप्रभाः ॥ २४

पाशाङ्कुशस्फुरन्नालनीलोत्पलकराः स्मरेत् ।
पूर्वादिषु चतुर्दिक्षु कोणेष्वग्न्यादिषु क्रमात् ॥ २५

[1]अनङ्गकुसुमां चैव तथा[2]ऽनङ्गादिमेखलाम् ।
[3]तथानङ्गादिमदनामनङ्ग[4]मदनातुराम् ॥ २६

[5]अनङ्गरेखां चानङ्गवेगां[6] चानङ्गपूर्विकाम् ।
[7]अङ्कुशां च तथानङ्गमालिनीं [8] परमेश्वरीम् ॥ २७

महासौभाग्यदे चक्रे कटवर्णविराजिते ।
सम्प्रदायाख्ययोगिन्यः सर्वाभरणभूषिताः ॥ २८

पाशाङ्कुशौ दर्पणं च पानपात्रं सुधामयम् ।
बिभ्रत्यः सर्वसुभगाः पश्चिमादिविलोमतः ॥ २९

शक्तीः प्रपूजयेद्देवि सम्प्रदायेन सिद्धये ।
[1]सर्वसङ्क्षोभिणी शक्तिः [2]सर्वविद्राविणी ततः ॥ ३०

[3]सर्वाकर्षणिका शक्तिः [4]सर्वाह्लादकरी प्रिये ।
[5]सर्वसम्मोहिनी शक्तिः [6]सर्वस्तम्भनकारिणी ॥ ३१

[7]सर्वजम्भनका नाम शक्तिः [8]सर्ववशङ्करी ।
[9]सर्वार्थरञ्जनी शक्तिः [10]सर्वोन्मादनकारिणी ॥ ३२

[11]सर्वार्थसाधकी शक्तिः [12]सर्वसम्पत्तिपूरकी ।
[13]सर्वमन्त्रमयी शक्तिः सर्वद्वन्द्वक्षयङ्करी ॥ ३३

सर्वार्थसाधके चक्रे णभवर्णविशोभिते ।
जपाकुसुमसङ्काशाः स्फुरन्मणिविभूषिताः ॥ ३४

महासौभाग्यगम्भीराः पीनवृत्तघनस्तनीः ।
रत्नपेटीविनिक्षिप्तसाधकेप्सितभूषणान् ॥ ३५

नानारत्नमयान्दिव्यान् दधतीर्हसिताननाः ।
पाशाङ्कुशौ च दधतीः संस्मरेत्तत्र योगिनीः ॥ ३६

पश्चिमादिविलोमेन पूजयेत्सर्वसिद्धिदाः ।
[1]सर्वसिद्धिप्रदा देवी [2]सर्वसम्पत्प्रदा ततः ॥ ३७

[3]सर्वप्रियकरी चैव [4]सर्वमङ्गलकारिणी ।
[5]सर्वकामप्रदा देवी [6]सर्वदुःखविमोचनी ॥ ३८

[7]सर्वमृत्युप्रशमनी [8]सर्वविघ्ननिवारिणी ।
[9]सर्वाङ्गसुन्दरी देवी [10]सर्वसौभाग्यदायिनी ॥ ३९

सर्वरक्षाकरे चक्रे मक्षवर्णविराजिते ।
पश्चिमादिविलोमेन निगर्भा योगिनीर्यजेत् ॥ ४०

उद्यद्भास्वत्सहस्राभा मुक्तालङ्कारभूषिताः ।
पाशटङ्कायुधज्ञानमुक्त[द्रा] वरदसत्कराः ॥ ४१

देवीः प्रपूजयेदेता यथेप्सितवरप्रदाः ।
[1]सर्वज्ञा [2]सर्वशक्तिश्च [3]सर्वैश्वर्यप्रदा तथा ॥ ४२

[4]सर्वज्ञानमयी देवी [5]सर्वव्याधिविनाशिनी ।
[6]सर्वाधारस्वरूपा च [7]सर्वपापहरा तथा ॥ ४३

[8]सर्वानन्दमयी देवी [9]सर्वरक्षास्वरूपिणी ।
[10]सर्वेप्सितार्थफलदा दशमी परमेश्वरी ॥ ४४

सर्वरोगहरे चक्रे वर्गाष्टकविजृम्भिते ।
पश्चिमादिविलोमेन रहस्या योगिनीर्यजेत् ॥ ४५

श्रीपीठं परितोऽधस्ताद्दाडिमीकुसुमप्रभाः ।
रक्तवस्त्रपरीधाना रक्तगन्धानुलेपनाः ॥ ४६

रक्तपुष्पाक्षतैः सम्यक् पूजयेत्सर्वसिद्धिदाः ॥
नानाभरणगम्भीराः पञ्चबाणधनुर्धराः ॥ ४७

पुस्तकं वरदानं च दधतोर्वर्गसंस्थिताः ।
वर्गाष्टकमहावर्णान् बिन्दुनादकलात्मकान् ॥ ४८

अवर्गान्तै *रेफबक्ष्मावामकर्णेन्दुबिन्दुमत् ।
देवी वाग्देवता पूज्या [1]वशिनीनाम सुन्दरी ॥ ४९

---

* रेफ, बकार, क्ष्मा = लकार, ऊकार, बिन्दुविशिष्टम् (ब्लूँ) इति ।

कवर्गादिकलायुक्तां* परां [2]कामेश्वरीं लिखेत् ।
चवर्गान्ते नवक्ष्माढ्यवामनेत्रशशीशवत् † ।। ५०

अनेन [3]मोदिनी पूज्या टवर्गान्ते ततः परम् ।
** [4]वायुक्ष्मावामकर्णेन्दुबिन्दुमद्विमलां यजेत् ।। ५१

तवर्गान्ते च कालक्ष्मावामाक्षीन्दुकलात्मकम् ।
[5]अरुणां पूजयेद्देवि पवर्गान्तेऽथकथ्यते ।। ५२

व्योमबीजमहीनीरवायुचन्द्रेशभूषितम् ।
अनेन [6]जयिनी पूज्या यवर्गान्तेऽथ लिख्यते ।। ५३

सरेफकालपवनप्रणवाङ्केन पूजयेत् ।
[7]सर्वेश्वरीं शवर्गान्ते क्षमवह्नीशबिन्दुमत् ।। ५४

अनेन [8]कौलिनीं देवि पूजयेदष्टमीं बुधः ।
अष्टकान्ते महेशानीरेता वाग्देवता यजेत् ।। ५५

सर्वसिद्धिप्रदे चक्रे त्वकथैश्च सहाक्षरैः ।
त्रिरेखागर्भशोभाढ्ये समस्ताणुविजृम्भिते ।। ५६

परापररहस्याख्या योगिनीः पूजयेत्क्रमात् ।
पश्चिमादिक्रमेणैव युग्मयुग्मविभेदतः ।। ५७

कामेशस्य च कामाख्या बाणाः साधारणाः प्रिये ।
तमुपर्यन्तद्वितीयं च बिन्दुनादाङ्कितं क्रमात् ।। ५८

---

* क्ल्ह्रीं ।   † ग्लौं ।

** ग्लूँ इति विमलां, ज्स्रीं इत्यरुणां, ह्स्ल्व्यूं इति जयिनीं झ्म्र्यूं इति सर्वेश्वरीं, क्ष्म्रीं इति कौलिनीम् च यजेत् इति नित्योत्सवे ।

कामेश्वरस्य कामेश्याश्चापयुग्मं यजेत्प्रिये ।
अनन्तो बिन्दुनादाढ्यः हृल्लेखा पाशयुग्मकम् ॥ ५९

कामेश्वरस्य कामेश्याः क्रमेण परमेश्वरि ।
अङ्कुशस्तु समानः स्यादुभयोः पूजयेत्सुधीः ॥ ६०

चतुर्दिक्षु च शोभाढ्याः स्वस्वायुधकराः क्रमात् ।
जम्भमोहवशस्तम्भपदमन्त्रान्विताः शुभाः ॥ ६१

अङ्गावरणबाह्ये तु आयुधाष्टकमर्चयेत् ।
कोणत्रयेषु सम्पूज्यास्तिस्रः कूटत्रयान्विताः ॥ ६२

कामेश्वरी च वज्रेशी तृतीया भगमालिनी ।
कामेश्वरी शुक्लवर्णा शुक्लमाल्यानुलेपना ॥ ६३

मुक्ताफलस्फुरद्भूषा नानाभरणभूषिता ।
पुस्तकं चाक्षसूत्रं च वरदं चाभयं क्रमात् ॥ ६४

दधती चाग्रतः पूज्या रुद्रशक्तिः प्रकीर्तिता ।
वज्रेश्वरी कुङ्कुमाभा स्फुरद्रत्नविभूषिता ॥ ६५

बालार्कवसना नीलकर्णचुम्बितलोचना ।
इक्षुकोदण्डपुष्पेषुवरदाभयशोभिता ॥ ६६

वज्रेश्वरी दक्षभागे विष्णुशक्तिर्महेश्वरी ।
उत्तरे भगमालाम्बा सद्यस्सन्तप्तहेमभा ॥ ६७

अनर्घ्यरत्नखचितभूषणा भुवनेश्वरी ।
पाशाङ्कुशज्ञानमुद्रावरदानकराम्बुजा ॥ ६८

ब्रह्मशक्तिर्महेशानी तापत्रयनिकृन्तनी ।
सर्वानन्दमये नादरूपे शब्दादिगोचरे ॥ ६९

परापररहस्याख्या योगिनी रतिपूर्विका ।
त्रिकूटया तु सम्पूज्या महात्रिपुरसुन्दरी ॥ ७०

श्रीविद्यां पूजयेद्देवि चिन्मयीं ब्रह्मरूपिणीम् ।
तर्पणानि पुनर्दद्याद्गन्धपुष्पादिभिर्यजेत् ॥ ७१

मानसैः प्रकटैर्देवि पूजयेद्बहुभिः प्रिये ।
मुद्राः सन्दर्शयेन्मन्त्री बन्धूककुसुमप्रभाः ॥ ७२

नानालङ्कारसुभगास्त्रैलोक्यवशकारिणीः ।
स्वस्वमुद्राकराः सर्वाः श्रीविद्यासम्मुखाः स्मरेत् ॥ ७३

प्रतिचक्रं तु मुद्रास्तु क्रमाच्चक्रेश्वरीं यजेत् ।
तत्तच्चक्रस्य मध्ये तु सिद्धिः पूज्याग्रतःशिवे ॥ ७४

त्रिपुरा स्फटिकाभासा मुक्तारत्नविभूषिता ।
पुस्तकं चाक्षमालां च कलशं पद्मपुस्तकम् ॥ ७५

दधतीं चिन्तयेन्नित्यं महापातकनाशिनीम् ।
त्रिपुरेशी पूर्वरूपा सुन्दरी कुङ्कुमप्रभा ॥ ७६

सर्वालङ्कारसम्पन्ना पुस्तकं चाक्षमालिकाम् ।
वराभयौ च दधती सामर्थ्यहसितानना ॥ ७७

अनया सदृशी देवी ध्येया त्रिपुरवासिनी ।
आरक्तलोचनां प्रान्ते महामदविघूर्णिताम् ॥ ७८

त्रिपुरेशीं महेशानीं पीनवृत्तघनस्तनीम् ।
उद्यद्भास्वत्सहस्राभां दिव्यालङ्कारमण्डिताम् ॥ ७९

पुस्तकं जपमालां च वरदं चाभयं करैः ।
दधती सकलानन्दा मालिनी कथ्यते पुरा ॥ ८०

इन्द्रगोपप्रभा देवि पाशाङ्कुशकपालिनी ।
महाभीतिकरा सम्यक् साधकानां क्षणादियम् ॥ ८१

सिद्धाम्बां परमेशानीं ध्यायेद्भयविनाशिनीम् ।
सम्पत्प्रदा भैरवीवन्महासिद्धिप्रदायिनी ॥ ८२

चक्रेण सिद्धिसहितां प्रतिचक्राधिदेवताम् ।
अतिगह्वरमेवेदं ज्ञात्वा चक्रं समर्चयेत् ॥ ८३

पादुकां पूजयामीति नमस्कारोऽथवा भवेत् ।
स्वाहा होमे तर्पणे तु तर्पयामीति संस्मरेत् ॥ ८४

अथवा रश्मयःसर्वा देवीरूपेण चिन्तयेत् ।
श्रीचक्रे परमेशानि स्वतन्त्रे स्वस्वसन्निभाः ॥ ८५

गोपितव्यं त्वया भद्रे स्वयोनिरिव पार्वति ॥ ८६

**इति श्रीदक्षिणामूर्तिसंहितायां श्रीविद्या(सपर्या)क्रमविवरणं नाम एकोनत्रिंशः पटलः ॥**

# ॥ त्रिंशः पटलः ॥

ईश्वर उवाच —

नैवेद्यं षड्रसोपेतं कामधेनुपवित्रितम् ।
दत्त्वा कर्पूरसहितं ताम्बूलं परशक्तये ॥ १

नित्यहोमं प्रकुर्वीत पूर्वोक्तविधिना प्रिये ।
यथाशक्ति जपं कुर्यात्स्तुतिं च परमेश्वरि ॥ २

आद्यश्लोकद्वयेनापि नत्वा सौभाग्यदेवताम् ।
सौवर्णरौप्यकांस्यादिपत्रे वसुदलं लिखेत् ॥ ३

गन्धेन चरुकं तत्र मुण्डाकं तत्र विन्यसेत् ।
वसुपत्रेषु चाज्येन पूरितान्नव दीपकान् ॥ ४

भ्रामयेद्रत्नविद्याभिर्धृत्वा धृत्वा तु मस्तके ।
मूलेन वा स्मरेदन्ते सर्वविघ्नोपशान्तये ॥ ५

समस्तचक्रचक्रेशीयुक्ते[1] देवि नवात्मके[2] ।
आरात्रिकमिदं देवि गृहाण मम सिद्धये ॥ ६

मण्डलं वामतः कुर्यात् साधको भुवि जानुमान् ।
वहत्पुटेन हस्ताभ्यां मण्डलोद्धारलक्षणम् ॥ ७

चतुरस्रे व्योमचक्रं मन्त्रेणानेन पूजयेत् ।
तारं च भुवनेशानीं व्यापकादि च मण्डलम् ॥ ८

---

1. युते इति बहुत्र साधकजनानुष्ठाने दृश्यते । 2. नवात्मिके ।

[1]ङेऽन्तं वाग्भवहृन्मन्त्रो मनुः सूर्याक्षरो भवेत् ।
अन्नोदमिश्रं भागेन साधारं पुष्पपूजितम् ॥ ९

संस्थाप्य पात्रं तत्रैव कलार्णेन बलिं हरेत् ।
[2]तारं परा सर्वविघ्नकृद्भ्यः सर्वं च भूलिखेत् ॥ १०

तेभ्यो हुं वह्निजाया च त्रिवारोच्चारणाद्बलिः ।
पूर्वोक्तबलिदानं च कुर्याद्विघ्नोपशान्तये ॥ ११

चतुर्धा बलिदानं तत् त्रिषु लोकेषु दुर्लभम् ।
ततः कुमारीं सन्तर्प्य त्रिपुरेश्यालयाऽथवा ॥ १२

त्रिवारं परमेश्वर्या सम्भाव्य मनुवित्तमः ।
खेचर्या शक्तिचक्रस्य स्वामिनीं संविदां पराम् ॥ १३

याजयेदात्मविज्ञानगहने कृपया गुरोः ।
शिवकोणे शेषिकेभ्यो निर्माल्यं सिद्धये क्षिपेत् ॥ १४

अर्घ्यपात्रं ततो देवि गुरवे गुरुमन्त्रवित् ।
नाममन्त्रेण च स्वस्थस्तर्पयेदुपदेशतः ॥ १५

वाममार्गेण देवेशि नत्वा मुद्राधरः शुचिः ।
पुनराधारगं कुर्यादाचरेद्दीपलक्षणम् ॥ १६

आरात्रिकस्य मध्यस्थं मूलेनैव तु भक्षयेत् ।
कपालिन्या वापि पात्रं नान्यथा वा समुद्धरेत् ॥ १७

---

1. ओं ह्रीं व्यापकमण्डलाय ऐं नमः इति ।
ङेऽन्तं चतुर्थ्यन्तं इत्यर्थः ॥
2. ओं ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं स्वाहा ।

द्वितीयं तत्त्वया दक्षे संयोगेनैव पार्वति ।
तत्वत्रयेण संयोगात्तर्पयेत्स्वान्तवासिनीम् ॥ १८

प्रथमं ब्रह्मरूपं तु द्वितीयं सर्वमन्त्रवित् (?) (विष्णुरूपकम्) ।
तृतीयमीशरूपं च विज्ञेयं मनुवित्तमैः ॥ १९

किञ्चिदुल्लास्य मुद्राभिः पञ्चभिः परमेश्वरि ।
श्रीगुरोराज्ञया देवि स्वयं श्रीत्रिपुरा भवेत् ॥ २०

अधोमुखानां सर्वासां रूपाण्यग्नौ प्रतिष्ठयेत् ।
आकृष्य मन्त्रांस्तत्रस्थान् शेषिकाभ्योऽक्षतादिकम् ॥ २१

दत्वा तु परमेशानि सुखी भूयान्न संशयः ।
अनिर्वाच्यमपि ज्ञेयमक्षरैः कथितं मया ॥ २२

चलाक्षरेण न्यायेन चन्द्रपीठेन च प्रिये ।
गोपितव्यं त्वया भद्रे जननीजारगर्भवत् ॥ २३

॥ इति श्रीदक्षिणामूर्तिसंहितायां बलियजनविधिर्नाम त्रिंशः पटलः ॥

## ॥ एकत्रिंशः पटलः ॥



**पार्वत्युवाच –**

होमादि सूचितं देव सम्यग्विस्तारितं नहि ।
साधकानां हिताय त्वं सिध्यर्थं कथय प्रभो ॥ १

**ईश्वर उवाच –**

शृणु देवि प्रवक्ष्यामि श्रीविद्यामन्त्रसाधनम् ।
शमीदूर्वाङ्कुराश्वत्थपल्लवैरर्कसन्निभैः ॥ २

श्रीचक्रं पूजयेद्देवि मासमात्रं समाहितः ।
सहस्रजन्मजं पापं हन्ति मासेन देशिकः ॥ ३

पश्चिमाभिमुखं लिङ्गं वृषशून्यमथापि वा ।
स्वयम्भूबाणदेशे वा शैवस्थाने महेश्वरि ॥ ४

तत्र स्थित्वा जपेन्मन्त्रं प्रवालाक्षस्रजाऽथ वा ।
मुक्तापद्माक्षरुद्राक्षस्फटिकोद्भवयाऽथवा ॥ ५

माणिक्यपद्मरागादिमनोहर्या जपेद्बुधः ।
जप्ते लक्षैकमात्रे तु भूचर्यो विघ्नकारिकाः ॥ ६

तासामपि यदा नासौ क्षोभं याति मनागपि ।
तदा लक्षत्रयं कुर्यात् नियमेन शुचिर्बुधः ॥ ७

मानसेनाथवा वाचोपांशुना वा जपेत्सुधीः ।
मानसोच्चारणं देवि जपकोटिफलप्रदम् ॥ ८

उपांशूच्चारणं देवि वाचिकाच्छतधा भवेत् ।
वाचिकं तु स्वमात्रं स्याच्छ्रीगुरोराज्ञया प्रिये ॥ ९

तद्दशांशेन होमःस्यात्कुसुमैर्वृक्षजैः प्रिये ।
कुसुम्भपुष्पैर्जुहुयान्मधुरत्रितयाप्लुतैः ॥ १०

तस्माद्भवति विद्येयमविद्याध्वंसिनी सताम् ।
योनिकुण्डे भगाकारे वर्तुले द्वन्द्वयोः प्रिये ॥ ११

नवत्रिकोणचक्रे वा चतुरश्रेऽथवाम्बुजे ।
वाक्पतेर्योनिकुण्डे तु भगे चाकर्षणं भवेत् ॥ १२

वर्तुलं श्रीप्रदं देवि वश्यार्थे तु त्रयं भवेत् ।
नवत्रिकोणे महती खेचरी सिद्धिभाग्भवेत् ॥ १३

चतुरश्रे तु सकलं शुभजातं भवेत्सदा ।
शान्तिकं पौष्टिकं लक्ष्मीरारोग्यं च सुखादिकम् ॥ १४

कमलैः सर्वसिद्धिश्च जायते नात्र संशयः ।
मल्लिकामालतीभिश्च त्रिमध्वक्तैर्वचस्पतिः ॥ १५

करवीरजपापुष्पैः सघृतैर्भुवनत्रये ।
योषिद्वश्यं ततो देवि कर्पूरं कुङ्कुमं मदम् ॥ १६

मृगस्य मिश्रितं कृत्वा कायसौभाग्यभाग्भवेत् ।
चाम्पेयैः पाटलैरन्यैः आम्रैरन्यफलैर्हुनेत् ॥ १७

सप्ताहं मासमात्रं वा लक्ष्मीः प्राप्नोति मन्त्रिणम् ।
श्रीखण्डमगरुं देवि कर्पूरं गुग्गुलुं हुनेत् ॥ १८

समग्रपुरसुन्दर्यो वश्यास्तस्य भवन्ति हि ।
हुनेत्फलं त्रिमध्वक्तं खेचरत्वं चतुष्पथे ॥ १९

दधिक्षीरमधूद्भिन्नलाजैर्हुत्वा न कालभाक् ।
अथवा नवलक्षं तु जपेद्विद्यां समाहितः ॥ २०

तद्दशांशेन होमं तु पूर्वोक्तविधिना यजेत् ।
साधयेत्स्वर्गभूलोकपातालतलवासिनः ॥ २१

राजिकालवणाभ्यां तु क्षोभयेज्जगतीमिमाम् ।
दध्ना शताष्टकं हुत्वा कालमृत्युं विनाशयेत् ॥ २२

घृतक्षीरद्वयादायुस्ततोऽष्टशतकं हुनेत् ।
मध्वाज्यगुग्गुलेनैव राजेन्द्रं वशमानयेत् ॥ २३

आरोग्यं घृतदूर्वाभ्यां बहलेन शताष्टकम् ।
त्रिमध्वक्तै रक्तवर्णैः करवीरैः सगुग्गुलैः ॥ २४

हुनेल्लक्षं वशीकुर्याद्विंशतिं धरणीभुजाम् ।
मध्वक्तकरवीरैस्तु साङ्गं भूपं वशं नयेत् ॥ २५

सप्तरात्रेण राज्येन शशिनः पूर्वशं नयेत् ।
पाटलैर्यूथिकाकुन्दैर्जातिभिः शतपत्रकैः ॥ २६

मालतीनवमल्लीभिर्मल्लिकापद्मकिंशुकैः ।
पूजनाद्धवनाद्वापि मिश्रितैर्वाप्यमिश्रितैः ॥ २७

सर्वसौभाग्यमाप्नोति बुध्या वाक्पतिरुच्यते ।
मुचुकुन्दैर्बिल्वपत्रफलैरसितनीरजैः ॥ २८

तगरै राजचम्पैश्च सिद्धयोऽष्टौ भवन्ति हि ।
नारिकेलैश्च खर्जूरैर्द्राक्षाभिश्चूतपल्लवैः ॥ २९

मनसा चिन्तितं कार्यं साधकस्य तु होमतः ।
पूजनेन च होमेन श्रीविद्यां परितोषयेत् ॥ ३०

चरं विकीर्य सर्वत्र कुमारीपूजनादिभिः ।
पूर्वोक्तबलिदानेन गुरुं सन्तोष्य च क्रमात् ॥ ३१

सुवासिनीश्च सम्पूज्य दद्याद्भूरिधनं सताम् ।
समग्रं कुसुमं होमे कूश्माण्डं बहुधा हुनेत् ॥ ३२

नारिकेलान्तरफलैः सकलैश्च मनः प्रिये ।
समग्रेणैव चूतस्य फलेन बदरं तथा ॥ ३३

पनसीफलगर्भस्थैर्गरैर्बीजोज्झितैर्हुनेत् ।
जम्बूफलं समग्रं स्याद् द्राक्षां चैव तथा हुनेत् ॥ ३४

रम्भाफलं मनोभागं लघु चेत्खण्डितं न हि ।
फलं लघु समग्रं स्यात्कस्तूरीकुङ्कुमं शशी ॥ ३५

गुञ्जामात्रं हुनेद्देवि तिलराजीशतं हुनेत् ।
तथैव लवणं लाजा मुष्टिमात्रं हुनेद्बुधः ॥ ३६

अन्नं तु ग्रासमात्रं हि पक्वान्नैश्च तथा हुनेत् ।
पुरं तु क्रमुकार्धेन श्रीखण्डं क्रमुकाकृति ॥ ३७

तथागरुं हुनेदाज्यं मनःसन्तोषकारि च ।
तच्चतुर्गुणभेदेन दधिदुग्धे हुनेत्सदा ॥ ३८

सर्वासामाहुतीनां तु मानं देवि मनःप्रियम् ।
कुण्डस्य पूजनं वक्ष्ये महाविघ्नविनाशनम् ॥ ३९

चतुर्विंशतिसङ्ख्याभिरङ्गुलीभिः सुविस्तृतम् ।
खातं च रचयेत्कुण्डे सर्वत्र सुमनोहरम् ॥ ४०

चतुरश्रं सर्वनेत्रसुभगं मेखलां ततः ।
सर्वत्रैकाङ्गुलं त्यक्त्वा तिस्रः कार्याः सुशोभनाः ॥ ४१

आदित्यवसुवेदानां सङ्ख्याङ्गुलिभिरुन्नता ।
चतुरङ्गुलविस्तारास्तिस्रोऽपि परमेश्वरि ॥ ४२

कुण्डस्य पश्चिमे भागे योनिं कुर्यात्सुशोभनाम् ।
रव्यङ्गुलिसुविस्तारां वस्वङ्गुलिसुविस्तृताम् ॥ ४३

मध्ये षडङ्गुलां देवि ह्यङ्गुलोच्चां मनोरमाम् ।
लक्षणं चतुरस्रस्य कथितं तव सुन्दरि ॥ ४४

कुण्डनिर्माणविषये प्रपञ्चसारसारसङ्ग्रहसङ्गृहीतक्रमः —

एवं भवति — "प्रथमं तावत् चतुर्विंशत्यङ्गुलप्रमाणं आयामविस्तारेण तावदङ्गुलप्रमाणं निम्नेन च भूमिभागं सूत्रेण परिसूत्र्य निखन्य, निम्नीकृत्य, पुनस्तस्मात् निम्नस्थलात् एकाङ्गुलतो बहिः परितः सूत्रमास्फाल्य तद्बहिः ततो द्वादशाङ्गुलमाने च परितः सूत्रम् आस्फाल्य, अत्र अनयोः आस्फालितसूत्रयोः मध्ये चतुरङ्गुलविभागेन तिस्रः मेखलाः कार्याः । इत्थं मेखलास्थानम् ॥

अथ मेखलालक्षणमुच्यते – दोः प्रमाणदीर्घेण द्वादशाङ्गुलोत्सेधेन चतुरङ्गुलविस्तारेण प्रथमां मेखलां विरचय्य, तस्या मेखलाया बहिः-पार्श्वे अष्टाङ्गुलोत्सेधेन चतुरङ्गुलविस्तारेण द्वितीयां मेखलां, तद्बहिः तत्पार्श्वे चतुरङ्गुलोत्सेधविस्तारेण तृतीयां मेखलां च विरच्य पुनस्तत्र कुण्डस्य पश्चिममेखलामध्यदेशे, भूमौ प्रथममेखलामध्यदेशसंश्लिष्ट-द्व्यङ्गुलाऽऽयामविस्तारं एकाङ्गुलोत्सेधं चतुरश्रं कृत्वा, तस्य

पूर्वदेशमारभ्य ऊर्ध्वक्रमेण दण्डवत् ऋजुतः द्वितीयमेखलाग्रान्तं वृत्ताकारेण नालं विरच्य, तत्र मध्यममेखलायां परिस्तरणार्थं छिद्रं विधाय, तस्माद् द्वितीयमेखलाग्रादारभ्य तृतीयमेखलाविस्तारस्य प्राग्भागावधि अश्वत्थपत्राकारां योनिं चतुर्विंशत्यङ्गुलप्रमाणां तृतीयमेखलातः यवमात्रसमुन्नतां तां अश्वत्थपत्राकारां मध्यतः अष्टाङ्गुलविस्तारां अग्रात् षडङ्गुलतः पश्चिमभागादारभ्य उभाभ्यां पार्श्वाभ्यां क्रमेण सङ्कोचवतीं मूलभागादग्रावधि क्रमेण किञ्चिन्निम्नस्थलां अग्रतो यवमात्रेण किञ्चित्कुण्डस्य अन्तर्निविष्टामिव कुर्यात् । तत्र अश्वत्थपत्रस्य चतुर्विंशत्यङ्गुलप्रमाणत्वं तु, प्रथममेखलां आरभ्य द्वितीयमेखलाग्रावधि खलु नालम् । तदग्रादारभ्य खलु पत्रारम्भः । तत्रैव द्वितीयमेखलातः तृतीयमेखलोच्छ्रायः चतुरङ्गुलः खलु । तेन तत्रैव पत्रस्य चतुरङ्गुलसङ्ख्या जाता । पुनर्मेखलात्रयस्य विस्तारं प्रत्येकं चतुरङ्गुलप्रमाणं खलु । तत्र द्वादशाङ्गुलप्रमाणं पत्रस्य जातम् । सम्भूय षोडशाङ्गुलप्रमाणं जातम् । पुनरष्टाङ्गुलविस्तारं च सम्भूय चतुर्विंशत्यङ्गुलप्रमाणा अश्वत्थपत्राकारा योनिः ॥

अथवा प्रथममेखलादावारभ्य द्वितीयमेखलाग्रावधि पत्रस्य नालं, तदष्टाङ्गुलप्रमाणं खलु । तत्रारभ्य तृतीयमेखलाग्रावधि चतुरङ्गुलप्रमाणम् । तत आरभ्य मेखलात्रयस्य विस्तारदेशं प्रत्येकं चतुरङ्गुलम् । सम्भूय द्वादशाङ्गुलसङ्ख्या जाता । एतानि सर्वाण्यङ्गुलानि सम्भूय चतुर्विंशत्यङ्गुलानि जातानि । एवं वा चतुर्विंशत्यङ्गुलप्रमाणा अश्वत्थपत्राकारा योनिः । तस्मादुक्तेन प्रकारेण कुण्डस्य गर्त – आयाम – विस्तार – उच्छ्राय योनीनां प्रत्येकं चतुर्विंशत्यङ्गुलमानेन निर्माणम् । तेन सर्वं चतुर्विंशतितत्त्वात्मकं इति सम्प्रदायः '' इति ॥

एतस्मिन् माति यद्भाव्यं तदन्येषु यथा भवेत् ।
[एतस्मिन् यद्भवेन्मानं तदन्येषु यथा भवेत् ।]
तेन मानेन सर्वाणि कुण्डानि रचयेद् बुधः ॥ ४५

गोमयोदकसंलिप्ते पूर्वात्पश्चिमदिग्गताः ।
दक्षिणाद्युत्तरांशं तु तिस्रस्तिस्रश्च कारयेत् ॥ ४६

प्रणवेनाभ्युक्ष्य मध्ये च कल्पयेद्यागविस्तरम् ।
शर्करां विकिरेत्तत्र त्रिकोणं तत्पुटं लिखेत् ॥ ४७

तद्बहिर्वसुपत्रं च ततो भूमण्डलं लिखेत् ।
उपर्युपरि मोदेन पीठं तत्सर्वमर्चयेत् ॥ ४८

मण्डूकं च तथा रुद्रं कालाग्न्याद्यं ततःपरम् ।
आधारशक्तिं कूर्मं च ततोऽनन्तं वराहकम् ॥ ४९

पृथिवीं च तथा कन्दं नालं पद्मं च कर्णिकाम् ।
पत्राणि केसरण्येवं तत्स्थानेषु च पूजयेत् ॥ ५०

धर्मं ज्ञानं च वैराग्यं ऐश्वर्यं पीठदिक्षु च ।
नञर्थकास्ते कोणेषु पीठस्य परिपूजयेत् ॥ ५१

पुनस्तारेण सम्पूज्य यागविष्टरकं यजेत् ।
मध्ये ऋतुमतीं विश्वमातरं वेदमातृकाम् ॥ ५२

पुरुषाराधितां ध्यात्वा तद्योनौ सम्पुटस्थितम् ।
वह्निकुण्डे परिभ्राम्य किञ्चिदङ्गारकं त्यजेत् ॥ ५३

अस्त्रमन्त्रेण सकलान् भूतान् सन्त्रासयेत्सुधीः ।
पश्चात्प्रज्वालयेद्वह्निं सङ्क्रमय्य तु दीपकम् ॥ ५४

दीपाद्दीपान्तरं यावत्स्फुरन्तं सर्वतोमुखम् ।
श्वासमार्गेण मनुविद्योनिमार्गेण सङ्क्षिपेत् ॥ ५५

कुण्डत्रिकोणमध्ये तु तत्र प्रज्वलयञ्छुचिम् ।
आदौ व्याहृतिभिः पश्चात् वह्निमन्त्रेण च क्रमात् ॥ ५६

चित्पिङ्गल हनद्वन्द्वं दहद्वन्द्वं पच द्विधा ।
सर्वज्ञाज्ञापय स्वाहा मनुना प्रार्थयेत्ततः ॥ ५७

अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।
सुवर्णवर्णमन(म)लं समिद्धं विश्वतोमुखम् ॥ ५८

अनलेराघिसंयुक्ताः सादियान्ता विलोमतः ।
बिन्दुनादाङ्किताः सप्तजिह्वार्णाः परिकीर्तिताः ॥ ५९

पद्मरागा सुवर्णा च तृतीया भद्रलोहिता ।
लोहिता च तथा श्वेता धूमिका च करालिका ॥ ६०

क्रमेण योजयेद्बीजैः विन्यसेत्परमेश्वरि ।
सलिङ्गगुदमूर्धास्यनासानेत्रेषु च क्रमात् ॥ ५१

सुराश्च पितरश्चैते स्मर्तव्यास्तासु सप्तसु ।
सहस्रार्चिः स्वस्तिपूर्ण उत्तिष्ठपुरुषस्तथा ॥ ६२

धूमव्यापी सप्तजिह्वो धनुर्धर इतीरिताः ।
ङेहृदन्तैः षडङ्गानि ततो मूर्त्यष्टकं न्यसेत् ॥ ६३

जातवेदाः सप्तजिह्वो हव्यवाहन एव च ।
*अश्वोदरभवश्च स्याद्वैश्वानर इमे ततः ॥ ६४

---

* मातृकायां "विश्वोदरश्चतुर्थः स्यादिति" पाठः दृश्यते ।

षष्ठः कौमारतेजाश्च विश्वदेवमुखो न्यसेत् ।
मूर्धास्यपार्श्वकटधन्धुकटिपार्श्वांसकेषु च ॥ ६५

ङेऽन्ताश्च सकला ज्ञेया अग्नितुल्याङ्गकाः क्रमात् ।
एवं विन्यस्तदेहः सन् पर्युक्ष्यार्घ्यजलेन च ॥ ६६

दिक्षु दर्भान् परिस्तीर्य ततस्तु परिषेचयेत् ।
वैश्वानर ततो जातवेद पश्चाद् हुताशन ॥ ६७

लोहिताक्ष च सर्वान्ते कर्मण्यथ च साधय ।
स्वाहान्तोऽणुरयं तावच्चक्रे चितिपङ्गलेति च ॥ ६८

अनेन वह्निमभ्यर्च्य ततो जिह्वाः समर्चयेत् ।
मध्ये च कोणषट्के च ततोऽङ्गानि प्रपूजयेत् ॥ ६९

मूर्तयो वसुपत्रेषु भूबिम्बे च दिगीश्वराः ।
पुनर्वैश्वानरं यष्ट्वा त्रिणेत्रमरुणप्रभम् ॥ ७०

शुक्लाम्बरधरं रत्नभूषणं पद्मसंस्थितम् ।
वरं स्वस्तिशक्तिकं च भीतिहारि च बिभ्रतम् ॥ ७१

अनेकमालिकाभिश्चाप्यङ्कितं संस्मरेत्ततः ।
अर्घ्योदकेन पात्रेण प्रोक्षयेच्छुद्धयेत्ततः ॥ ७२

उन्मुखीकृत्य सर्वाणि तत्र तत्र विनिक्षिपेत् ।
प्रणीता प्रोक्षणी युग्मे जलं स्थाल्यां घृतं तथा ॥ ७३

अन्यसर्वेषु पात्रेषु होमद्रव्याणि सङ्क्षिपेत् ।
स्रुक् पात्रे च स्रुवे पात्रे घृतपुष्पं विनिक्षिपेत् ॥ ७४

स्थालीं दूर्वाञ्चितां कुर्यात् सर्वतो धूमयेत्प्रिये ।
मेखलासु च सर्वासु वेष्टयेद्दीपमालिकाः ॥ ७५

त्रिपङ्क्त्या चाभितः कुण्डं ततो व्याहृतिभिर्हुनेत् ।
ब्रह्माणं दक्षिणेऽभ्यर्च्य हुनेद्वैश्वानराणुना ॥ ७६

गर्भाधानादिसंस्कारान् चिन्तयेत्सर्वसिद्धये ।
अनेन विधिनाभ्यर्च्य श्रीचक्रं तत्र चिन्तयेत् ॥ ७७

तदन्तरे समावाह्य महात्रिपुरसुन्दरीम् ।
समस्तचक्रचक्रेशीसहितां होमयेत्ततः ॥ ७८

दशाज्याहुतिभिः पश्चात् पूजनादिक्रमेण च ।
समस्तचक्रचक्रेशीः प्रकटाद्याश्च योगिनीः ॥ ७९

होमयेच्च घृतेनैव एकैकामाहुतिं क्रमात् ।
ततः पूर्वोक्तसुद्रव्यैर्होमयेत्सुभगां पराम् ॥ ८०

हवनं पद्मरागायां सर्वसिद्धिप्रदं भवेत् ।
रुद्ररक्तांशुचर्यां च सर्वकामफलाप्तये ॥ ८१

[1] लोहिता च तयोः शान्तिः स्तम्भनं च क्रमाद्भवेत् ।
उच्चाटनं तु धूमिन्यां करालिन्यां च मारणम् ॥ ८२

इति ते कथितं दिव्यं होमलक्षणमुत्तमम् ।
[2] हुता विघ्नौघशमनी नान्यथा वरवर्णिनि ॥ ८३

---

1. लोहितायां तथा शान्तिः ...
2. हुताद्विघ्नौघशमनम् इति पाठः सुगमः इति ज्ञायते ।

दीपस्थानं समाश्रित्य जपहोमौ समाचरेत् ।
वसुकोष्ठं लिखेत्कूर्मं मध्ये स्थानं प्रकल्पयेत् ॥ ८४

स्वरान् द्वन्द्वविभागेन पूर्वादिक्रमतो लिखेत् ।
काद्यान् वर्गास्तु सप्तैते पूर्वादिक्रमतो लिखेत् ॥ ८५

कक्षवर्गोऽष्टमे योज्यः कूर्मचक्रमिदं यजेत् ।
स्थानाक्षरं यत्र देवि सिद्धिस्तत्र न संशयः ॥ ८६

स्थानाक्षरं मुखंक्षेयं पार्श्वयोस्तस्य वैकरौ ।
तत्र शून्यं फलं मध्ये कोष्ठयुग्मं तु मृत्युदम् ॥ ८७

उदरं कच्छपस्यैतत्पादास्तत्पश्चिमे क्रमात् ।
रागहानिकरं पुच्छं तयोर्मध्यगतं भवेत् ॥ ८८

दारिद्र्यदुःखदं चैव तस्माद्वक्त्रं समाश्रयेत् ।
तत्रैव सिद्धिर्नान्यत्र श्रीगुरोराज्ञया प्रिये ॥ ८९

देशं वा कल्पयेत् स्थानं नगरं ग्राममेव वा ।
दीपे वा सोऽपि कर्तव्यः किम्पुनर्हवनं जपः ॥ ९०

॥ इति श्रीदक्षिणामूर्तिसंहितायां होमजपस्थानलक्षणं नाम एकत्रिंशः पटलः ॥

## ॥ द्वात्रिंशः पटलः ॥

ईश्वर उवाच —

अथातः सम्प्रवक्ष्यामि चक्रराजस्य साधनम् ।
एवं संसिद्धविद्यायाः विनियोगक्रमं शृणु ॥ १

कृत्वा सिन्दूररजसा चक्रं तत्र विचिन्तयेत् ।
साध्यप्रतिकृतिं नामलेखनाङ्कां शुभां गतः ॥ २

ज्वलन्ति तु क्षणादेव मोहिता भयवर्जिता ।
एवं सूर्यसमा याति तथान्यत्कथितं प्रिये ॥ ३

तन्मध्ये संस्थितो मन्त्री चिन्तयेदरुणप्रभम् ।
आत्मानं च तथा साध्यं तदा सौभाग्यसुन्दरः ॥ ४

अरुणैरुपचारैस्तु पूज्यते मुद्रया युतः ।
तस्य नाम्ना युतः सम्यक् स भवेद्दास एव हि ॥ ५

अदृष्टस्त्रीनामवर्णांश्च चक्रमध्ये विलिख्य तु ।
योनिमुद्राधरो भूत्वा वेगादाकर्षणं भवेत् ॥ ६

देवकन्यां राजकन्यां नागकन्यामथापि वा ।
गोरोचनाकुङ्कुमाभ्यां समभागं च चन्दनम् ॥ ७

अष्टोत्तरशतावृत्त्या तिलकं सर्वमोहनम् ।
पुष्पं फलं जलं वान्नं गन्धं वस्त्रं च भूषणम् ॥ ८

ताम्बूलं जपपूर्वं च यो यस्यै सम्प्रयच्छति ।
अङ्गना वीक्षणादेव दासी चास्य भवेत्प्रिये ॥ ९

करवीरैः रक्तवर्णैस्त्रिमध्वक्तैश्च पूजयेत् ।
चिन्तयेन्मासमात्रं हि साध्याख्यां ललनां ततः ॥ १०

इति कृत्वा महेशानीं पूजयेदरुणप्रभाम् ।
सिन्दूररचिते चक्रराजे सम्मोहयेत्क्षणात् ॥ ११

त्रैलोक्यदुर्लभां चापि रम्भां चाकर्षयेज्जगत् ।
चिताङ्गारेण चक्रं तु लिखेद्रक्तद्रवेण हि ॥ १२

बध्वा बाहावथ क्वापि ज्वरं नाशयति क्षणात् ।
अर्कनिम्बद्रवाभ्यां तु लेखं चार्कस्य (?) संलिखेत् ॥ १३

द्वयोर्नाम मध्यबाह्यदेशे चक्रस्य संलिखेत् ।
गोमूत्रे स्थापयेत्तच्च भवेद्विद्वेषणं क्षणात् ॥ १४

धूपयेच्चन्दनं रात्रौ वस्तु चाधारयेत्ततः ।
अष्टोत्तरशतावृत्त्या होमयेत् भुवनत्रयम् ॥ १५

लिप्तगोमयभूमौ तु लिखेद्रोचनया ततः ।
सुरम्यां प्रतिमां रम्यभूषाढ्यां परिचिन्तयेत् ॥ १६

तद्भालगलहृन्नाभिजन्ममण्डलयोजिताम् ।
जन्मनाममहाविद्यामङ्कुशान्तर्विदर्भिताम् ॥ १७

सर्वाङ्गसंलीनतया कामकूटं समालिखेत् ।
साध्यासाभिमुखो भूत्वा श्रीविद्यान्यासविग्रहः ॥ १८

क्षोभिणीमुद्रया विद्यां सम्यगष्टोत्तरं यजेत् ।
योजयेत्तां कामगेहे चन्द्रसूर्यकलात्मके ॥ १९

सानुरागा तु विकला कामसायकपीडिता ॥
त्रैलोक्यसुन्दरी वापि क्षणादायाति मोहिता ॥ २०

अथवा मातृकां चक्रबाह्ये संवेष्टय मन्त्रवित् ।
तच्चक्रं पूजयेत्सम्यक् विद्यार्णस्य च चेज्जपात् ॥ २१

अवध्यः सर्वभूतामां व्याघ्रादीनां न संशयः ।
श्रीखण्डागरुकस्तूरीकर्पूरैश्च सकुङ्कुमैः ॥ २२

स्वनाम क्रमतो लिख्य पूर्ववन्मातृकां लिखेत् ।
तेनाजरामरत्वं च साधकस्य न संशयः ॥ २३

अनेनैव प्रकारेण रोचनाऽगरुकुङ्कुमैः ।
चक्रं विलिख्य साध्यार्णं साधकान्तर्विदर्भितम् ॥ २४

त्रैलोक्यमोहनो मन्त्री भवत्येव न संशयः ।
कामकूटेन देवेशि सन्दर्भ्य पृथगक्षरम् ॥ २५

साध्यनाम त्रिकोणान्तर्मातृकां वेष्टयेद्बहिः ।
स्वर्णमध्यगतं धार्यं शिखायां यत्र कुत्रचित् ॥ २६

लोकपालाश्च राजानः दुष्टास्त्रैलोक्यसंस्थिताः ।
ते सर्वे वशमायान्ति सन्निपातादयो ज्वराः ॥ २७

अनेन विधिना नाम पुरा सन्दर्भ्य सङ्क्षिपेत् ।
चतुष्पथे मध्यदेशे दिक्षु पूर्वादिषु क्रमात् ॥ २८

तस्य सौभाग्यमायाति राजानः किङ्कराः सदा ।
स्फुरत्तेजोमयीं पृथ्वीं प्रज्वलन्तीं चराचरम् ॥ २९

चक्रान्तश्चिन्तयेन्नित्यं मासषट्कं ततो नरः ।
तेन कन्दर्पसुभगः लोके भवति निश्चयात् ॥ ३०

दृष्ट्वा चाकर्षते लोकं विषं नाशयति ज्वरान् ।
तथा विषं च हरति दृष्ट्वा वश्यं करोति च ॥ ३१

रात्रौ सिन्दूरलिखितं पूजयेदेकचिन्तनः ।
यदा तदैव लोकोऽयं वश्यो भवति नान्यथा ॥ ३२

भूर्जपत्रे लिखेच्चक्रं रोचनागरुकुङ्कुमैः ।
स्वनामदर्भितं कुर्याद्देशे वा पुटभेदनम् ॥ ३३

मण्डलं विषमस्थानं भूमौ चक्रं निधापयेत् ।
धारयेद्वा ततो मन्त्री पुरं क्षोभयति क्षणात् ॥ ३४

उन्मत्तरसलाक्षार्कक्षीरकुङ्कुमरोचनाः ।
कस्तूर्यलक्तसहिता एकीकृत्य तु संलिखेत् ॥ ३५

यन्नाम्ना तस्य देवेशि चोरजं व्याघ्रजं भयम् ।
ग्रहजं व्याधिजं चैव रिपुजं सिह्मजं भयम् ॥ ३६

अहिजं वाजिजं नास्ति सर्वान्मोहयति क्षणात् ।
रोचनाकुङ्कुमाभ्यां तु मध्यगां (गं) संलिखेद्बुधः ॥ ३७

त्रिकोणोभयगं चैव साध्यनामाङ्कितं त्वधः ।
तच्चक्रं धारयेत्तस्मात् सप्ताहात्किङ्करो भवेत् ॥ ३८

पतिद्रव्येण चक्रान्तर्लिखेद्विद्वानधस्ततः ।
साध्यनाम विलिख्यैतत्पूर्वस्यां दिशि सङ्क्षिपेत् ॥ ३९

तस्माद् ब्रह्मापि जीवोऽपि सर्वज्ञो मूकतां व्रजेत् ।
अनेन विधिना नीलीरसेन विलिखेच्च तत् ॥ ४०

दक्षिणाभिमुखो मन्त्री वह्नौ दग्ध्वा रिपुं दहेत् ।
महिषाश्वपुरीषेण गोमूत्रेण च संलिखेत् ॥ ४१

आरनालस्थितं कुर्याद् भवेद्विद्वेषणं क्षणात् ।
साध्यनाम लिखेन्मध्ये काकभक्षेण लम्बयेत् ॥ ४२

संलिख्य रोचनाद्रावैराकाशे दृष्टिगं तथा ।
शत्रूनुच्चाटयेदाशु हठोच्चाटोऽयमीरितः । ४३

महानीलीरसोद्भिन्नरोचनादुग्धमिश्रितैः ।
लाक्षारसैर्लिखेच्चक्रं चतुर्वर्णान् वशं नयेत् ॥ ४४

अनेन विधिना नीरे स्थापयेत्तज्जलेन तु ।
सौभाग्यं महदाप्नोति स्नानपानान्न संशयः ॥ ४५

पीठं चक्रं यजेत्पूर्वं स्तम्भयेत्सर्ववादिनः ।
सिन्दूरलिखितं चक्रमुत्तरे लोकवश्यकृत् ॥ ४६

पश्चिमे पूजितं चक्रं गैरिकालिखितं ततः ।
मन्त्रिणो देवता वश्याः किम्पुनर्योषितः प्रिये ॥ ४७

तथैव दक्षिणास्यास्तु कृष्णं चक्रं समर्चयेत् ।
साध्यस्य मन्त्रहानिः स्यात् मरणं च विशेषतः ॥ ४८

क्रमाद्दिगन्तरास्यस्तु वह्निकोणादिषु क्रमात् ।
स्तम्भविद्वेषणव्याधिमुच्चाटं कुरुते नरः ॥ ४९

दुग्धे वश्यकरं क्षिप्रं रोचनालिखितं हठात् ।
दग्ध्वा तद्वह्निमध्यस्थं सर्वशत्रून् विनाशयेत् ॥ ५०

गोमूत्रमध्यगं चैतद्भवेदुच्चाटनं रिपोः ।
विद्वेषणं भवेच्चक्रं* तेनैव परमेश्वरि ॥ ५१

सिन्दूरेण लिखेच्चक्रं निर्जने च चतुष्पथे ।
सर्वबाह्यान्तमारभ्य मध्यान्तं मातृका लिखेत् ॥ ५२

कुलाचारक्रमेणैव रात्रौ सम्पूज्येत्क्रमात् ।
साधकः खेचरो देवि जायते नात्र संशयः ॥ ५३

चतुर्दश्यां निशि स्वस्थो रुद्रभूमौ प्रपूजयेत् ।
षण्माससङ्ख्यया तेन साक्षाद्रुद्र इवापरः ॥ ५४

अञ्जनं विपन्नं (?) सिद्धघुटिका पादुकाजयम् ।
खड्गवेतालसौभाग्ययक्षिणीचेटकादिकम् ॥ ५५

सकलं सिद्धिसमयं मन्त्री प्राप्नोति नान्यथा ।
चतुर्दश्यां चतुर्दश्यां प्रत्यष्टम्यां समाहितः ॥ ५६

एकविंशतिरात्रं तु निशि प्रेतक्षमातले ।
श्रीचक्रपूजनात्तद्वत् सुरपूज्यस्तु साधकः ॥ ५७

पाशाङ्कुशधनुर्बाणैः पौरुषैर्महेश्वरि ।
कामो भूत्वा स्वर्गभूमिपातालतलयोषिताम् ॥ ५८

हर्ता कर्ता स्वयं चैतन्महदाकर्षणं भवेत् ।
तद्वत्कामेश्वरीशस्त्रैर्देव्यात्मा भुवनत्रये ॥ ५९

---

* चक्रेणानेनैव

पुरुषाकर्षणं चैतद्राजानं किङ्कराः प्रिये ।
एतत्कामकलास्थानं कथितं बीजभेदतः ॥ ६०

वाग्भवाराधनाद्देवि ज्ञानं सारस्वतं लभेत् ।
श्वेताभरणवस्त्राढ्यां श्वेतपुष्पैः समर्चयेत् ॥ ६१

अनेन विधिना देवि वाग्भवाराधनं भवेत् ।
अथ कामकलाकामसामर्थ्यं शृणु पार्वति ॥ ६२

काममन्मथकन्दर्पा मकरध्वज एव च ।
महाकामश्च पूर्वोक्ताः पञ्च कामाः क्रमेण तु ॥ ६३

कामं मन्मथमध्यस्थं देवं कन्दर्पवेश्मगम् ।
तत्पुटस्थं मीनकेतुं महाकामेशमस्तकम् ॥ ६४

अनेन कामतत्त्वेन मोहयेज्जगतीतलम् ।
मूलादिसृष्टिसंहारबिसतन्तुतनीयसी ॥ ६५

तस्मात्कुण्डलिनी शक्तिः शक्तिकूटे महेश्वरि ।
त्रिकूटा त्रिपुरा देवि सर्वसिद्धिप्रदा भवेत् ॥ ६६

चतुष्षष्टिर्यतः कोट्यो योगिनीनां महौजसाम् ।
चक्रमेतत्समाश्रित्य सतां सिद्धिप्रदाः सदा ॥ ६७

॥ इति श्रीदक्षिणामूर्तिसंहितायां श्रीविद्याप्रयोगबीजसाधनं नाम द्वात्रिंशः पटलः ॥

## ॥ त्रयस्त्रिंशः पटलः ॥



ईश्वर उवाच —

अथ दीक्षाविधिं वक्ष्ये दुर्लभं भुवनत्रये ।
वसुकोणं द्वादशारं षोडशारं ततःपरम् ॥ १

द्विदशारं वृत्तयुग्मं ततोऽष्टदलमालिखेत् ।
भूबिम्बं च ततो मध्ये पूजयेत् त्रिपुरां पराम् ॥ २

आदावङ्गानि सम्पूज्य त्रिकोणेषु रतित्रयम् ।
मातरः परपत्रेषु वामाद्या रवियोनिषु ॥ ३

नित्या निरञ्जना क्लिन्ना क्लेदिनी मदनातुरा ।
मदद्रवा द्राविणी च द्रविणा रागवत्यपि ॥ ४

कामेश्वरी तथा कामदीपिनी कामकेसरी ।
ललिता क्षोभिणी भद्रा स्वच्छन्दललिता क्रमात् ॥ ५

कलायोनिषु सम्पूज्य ततो विंशतियोनिषु ।
मायावती महाक्षी च ततः सर्ववशङ्करी ॥ ६

झङ्कारी भीमरावा च कमला कमलेश्वरी ।
नीलग्रीवा विशालाक्षी भेरुण्डा डामरेश्वरी ॥ ७

समया समयेशानी नित्यानन्दा महोदया ।
सर्वसौभाग्यदाऽऽनन्दा चण्डिका चन्द्रशेखरा ॥ ८

सर्वेश्वरी च सम्पूज्या पीठानि वसुपत्रके ।
भूगृहे त्रिपुरेशी च दीक्षायोन्यङ्कितं यजेत् ॥ ९

एतदग्रे तु धान्यैस्तु साधारं कलशं क्षिपेत् ।
विशेषगन्धपुष्पैस्तु स्वर्णरत्नैः प्रपूजयेत् ॥ १०

समीपे चक्रराजं च सम्यगभ्यर्च्य देशिकः ।
आद्यक्षरेण संलग्नं सुन्दरं नाम कल्पयेत् ॥ ११

आत्मानं योजयित्वाऽथ गुरुभिर्मानवैस्ततः ।
स्मर्तव्या गुरवः सर्वे सम्यक् प्रणतिपूर्वकम् ॥ १२

भूमौ लिखित्वा विद्यां च सम्यक् पुष्पादिभिर्यजेत् ।
शिष्याय दर्शयेद्विद्यां जपनाशभयात्प्रिये ॥ १३

यदि स्यान्महती प्रीतिः शिष्यस्य प्राणदस्य तु ।
तदैकोच्चारमात्रेण दक्षकर्णे जपेत् पराम् ॥ १४

षोडशार्णां महाविद्यां न दद्यात्कस्यचित्प्रिये ।
राज्ञे राज्यप्रदायापि पुत्राय प्राणदाय वा ॥ १५

शाम्भवाज्ञां प्रकुर्वीत दृष्ट्वा खेचरसंज्ञिकाम् ।
अनिर्वाच्योपदेशस्तु स्पर्शनाद् ब्राह्मणो भवेत् ॥ १६

कलशस्थैः पल्लवैस्तु त्रिवारं प्रोक्षयेत्सुतम् ।
भवेद्यद्यभिषिक्तस्तु तदासौ देशिकाग्रणीः ॥ १७

गण्डूषमुखसंयुक्तस्तदार्हाय शिवार्चने ।
अन्यथा नैव सिद्धिःस्यात् सविकल्पस्तु पार्वति ॥ १८

न सिद्धिस्तस्य कुत्रापि श्रीविद्या च पराङ्मुखी ।
गुरवे दीयते सर्वमज्ञानं क्षाल्यतेऽपि च ॥ १९

तस्माद्दीक्षेयमाख्याता मन्त्रसिद्धिकरी प्रिये ।
दीक्षितः सन्महेशानि दूतीयागं समाचरेत् ॥ २०

विशेषार्घ्यविधिं कुर्यात् पश्चाद् दूतीं समानयेत् ।
समयाचारविधिना मण्डिता सुन्दरानना ॥ २१

अन्यक्षेत्रकुलोद्भूता तरुणी चारुलोचना ।
आनन्दमुदिता ग्राह्या विरूपीं विकृताननाम् ॥ २२

व्यङ्गां वृद्धां च विधवां गर्विणीं भक्तिवर्जिताम् ।
कुमारीं कुत्सितां खिन्नां द्वेषिणीं व्रतचारिणीम् ॥ २३

वर्जयेत्परमेशानि पूर्वोक्ता चेत् सुलोचना ।
भगमालां समुच्चार्य तस्या योनिं प्रपूजयेत् ॥ २४

श्रीविद्यां पूजयेत्तत्र नवचक्रप्रमोदिताम् ।
तद्योनौ पूजयेद्देवि श्रीविद्यां षोडशाक्षरीम् ॥ २५

कामेश्वरीस्वरूपां च कामशास्त्रैर्विराजिताम् ।
कामेश्वरं प्रवक्ष्यामि तन्त्रभेदेन सुन्दरि ॥ २६

देवादिपीठसम्राजत्परां पीठनिवासिनीम् ।
हृत्कूटां हृत्कलां देवि शिवाय च यजेन्मनुम् ॥ २७

स्वाधिष्ठानं दशार्णेन नवचक्रेश्वरेण हि ।
पूजयेत्कामरूपः सन् कामशास्त्रोचितैः प्रियैः ॥ २८

सीत्कारः प्रणवो देवि भाषणं जप उच्यते ।
तत्वानन्दश्चुम्बनं स्यात् कुचमर्दः शिवार्चनम् ॥ २९

नखदन्तक्षतादीनि पुष्पमालादिराजनम् ।
ताडनं हवनं सिद्धिर्वीर्यं शुद्धिर्विसर्जनम् ॥ ३०

वीर्यरेतः समादाय विशेषार्घ्ये निधापयेत् ।
तेनामृतेन श्रीदेवीं तर्पयेत्कुलमार्गतः ॥ ३१

अतिप्रमथनाद्देवि समूत्वस्त्रीरजस्तथा ।
नखास्थिरेतो मुख्यानि कुलद्रव्याणि भारयतः ॥ ३२

भैरवो यदि सञ्जातः सिद्धिस्तस्य न संशयः ।
निर्विकल्पयस्तु मन्त्रज्ञो ब्रह्म साक्षान्नसंशयः ॥ ३३

काम्यं नैमित्तिकं ज्ञात्वा श्रींविद्यां परितो यजेत् ।
दीक्षितस्याधिकारोऽत्र नान्यस्य परमेश्वरि ॥ ३४

पुस्तके लिखितं दृष्ट्वा स्वयं ज्ञात्वा करोति यः ।
ब्रह्महत्यासुरापानस्वर्णस्तेयादिपातकैः ॥ ३५

लिप्यते नात्र सन्देहो नरके निवसत्यसौ ॥ ३६

इति श्रीदक्षिणामूर्तिसंहितायां दीक्षावद्दूतीयजनविवरणं नाम त्रयस्त्रिंशः पटलः ॥

## ॥ चतुस्त्रिंशः पटलः ॥



ईश्वर उवाच —

अथ वक्ष्ये महेशानि पवित्रारोपणं महत् ।
यस्मिन् कृते कृतं सर्वमन्यथा शून्यमुच्यते ॥ १

गते संवत्सरे यस्तु न करोति पवित्रकम् ।
एकीकृत्य फलं तस्य नीयते दुर्गणैर्बलात् ॥ २

आषाढ उत्तमो मासः श्रावणो मध्यमः प्रिये ।
हीनो भाद्रपदो मासः पक्षौ सितसितेतरौ ॥ ३

प्रशस्तः शुक्लपक्षस्तु तदलाभे सितेतरः ।
चतुर्दश्यष्टमीपूर्णमासीतिथिषु वै यजेत् ॥ ४

पट्टसूत्रं विशिष्टं तु कार्पासजनितं तु वा ।
त्रिगुणं त्रिगुणीकृत्य प्रक्षाल्यामलवारिणा ॥ ५

पश्चिमास्योक्तमनुभिः (?) दक्षिणैः शोधयेत्ततः ।
मन्त्रैरथ पवित्राणि मनोरम्याणि कारयेत् ॥ ६

अष्टोत्तरशतं ज्येष्ठं तदर्धं मध्यमं प्रिये ।
तदर्धं च कनिष्ठं स्यात् यथाशक्त्यथवा प्रिये ७

उत्तरास्योदितैर्मन्त्रैर्दशग्रन्थैस्तु कारयेत् ।
विचित्रया चित्रयेत्ताः कुङ्कुमाक्ताभिरद्रिजे ॥ ८

पवित्रदानदिवसात्पूर्वेद्युरधिवासनम् ।
सद्योऽधिवासनं वापि कुर्यात्तु परमेश्वरि ॥ ९

रात्रौ समाधिभिः सार्धं नित्यपूजाद्यनन्तरम् ।
ऊर्ध्वं सिद्धासनैर्मन्त्रैः सूत्रपातं तु वामतः ॥ १०

प्रापयित्वाऽथ वर्मभ्यां कृत्वा रक्षावगुण्ठने ।
दन्तकाष्ठं तथा गन्धभस्मचन्दनमृत्तिकाः ॥ ११

सिद्धार्थांश्च तथा धात्रीफलं ससुममष्टसु ।
पूर्वादिदिक्षु क्रमतः परितः सूत्रभाजनाः ॥ १२

अश्वत्थपत्रपात्रेषु प्रक्षिपेत्सिद्धिहेतवे ।
ओङ्कारहोमस्वाहेशब्रह्ममार्गशिखिध्वजाः ॥ १३

सूर्यः सदाशिवः सर्वा देवताः स्युर्न चामराः ।
सूत्रेषु पूजयेद्ब्रह्मविष्ण्वीशांश्च त्रिसूत्रके ॥ १४

क्रिया च पौरुषी वीरा गायत्री चापराजिता ।
विजया च जया देवि मुक्तिदा च सदाशिवा ॥ १५

मनोन्मनी च नवमी दशमी सर्वतोमुखी ।
ग्रन्थिस्था देवताः पूज्या उपचारैः समर्चयेत् ॥ १६

मूलमन्त्रेण चामन्त्र्य पवित्रेषु कला यजेत् ।
नित्या षोडश देवेशि श्रीविद्यां च स्मरेत्प्रिये ॥ १७

अधिवासविधिः प्रोक्तः पश्चादाराधनं भवेत् ।
नित्यार्चनानन्तरं तु ततो नैमित्तिकं भवेत् ॥ १८

समस्तेभ्यः पवित्राणि कन्यकाभ्यः सभोजनम् ।
स्वगुरुं पूजयेत्पश्चात् वस्त्रालङ्कारगोधनैः ॥ १९

यथाशक्ति नमस्कृत्य देवीरूपेण चिन्तयेत् ।
आरोपयेत्पवित्रं तु वित्तशाठ्यविवर्जितम् ॥ २०

गुरुः सम्पूज्यते यत्र तत्कर्म सफलं बहु ।
स चेन्न पूज्यते यत्र क्रिया सा निष्फला सदा ॥ २१

गुरोरभावे तत्पुत्रं पुत्राभावे तदङ्गनाम् ।
तदभावे च तत्पौत्रं दौहित्रं तदसम्भवे ॥ २२

सर्वाभावेऽर्चयेदन्यं गुरुगोत्रसमुद्भवम् ।
पूज्यते स्वगुरुर्यत्र तत्रैता: सफला: क्रिया: ॥ २३

न पूज्यते निष्फलास्ता भवन्ति परमेश्वरि ।
हुत्वा पूर्णाहुतिं पश्चात् अग्नौ दद्यात्पवित्रकम् ॥ २४

श्रीचक्रमध्ये सिद्धायै श्रीविद्यायै निवेदयेत् ।
पर्वतत्र करोत्यण्वी ...

॥ इति श्रीदक्षिणामूर्तिसंहितायां पवित्रारोपणविधिर्नाम चतुस्त्रिंशः पटलः ॥

## ॥ पञ्चत्रिंशः पटलः ॥

ईश्वर उवाच –

अथ वक्ष्ये महेशानि मदनारोपणक्रियाम् ।
पवित्रपर्ववत्सापि कर्तव्या साधकैः प्रिये ॥ १

चैत्रादयस्त्रयो मासाः पक्षौ सितसितेतरौ ।
एतेषां पूर्वपूर्वस्तु कालः सर्वोत्तमो भवेत् ॥ २

अष्टम्यां च चतुर्दश्यां पौर्णमास्यामथापि वा ।
पूर्वरात्रौ प्रकुर्वीत सद्यो वाधिनिवासनम् ॥ ३

आमन्त्र्य मदनं वाद्यां चतुष्कल्पलतादिभिः ।
शिवप्रसादसम्भूत त्वत्र सन्निहितो भव ॥ ४

शिवाकार्यं समुद्दिश्य नेतव्योऽसि शिवाज्ञया ।
इत्यामन्त्र्य रतिं कामं तत्र सम्पूजयेत्सुधीः ॥ ५

स्वयमुत्पाद्य दमनं समूलं पल्लवैर्युतम् ।
आनीतमथवान्येन मौल्यादानीतमीश्वरि ॥ ६

वामतः स्थापयेद्देवि सर्वतोभद्रकेऽम्बुजे ।
वस्वरे दामन पात्रं स्थापयेत्पूजयेत्ततः ॥ ७

प्रणवं भुवनेशानीं रतये नम इत्यपि ।
मन्त्राभ्यां पूजयेत्तत्र दमनं कर्णिकागतम् ॥ ८

ततस्तत्पद्मपूर्वादिदलेषु पुटिकां न्यसेत् ।
अष्टस्वष्टाष्टभिर्मन्त्रैरष्टद्रव्ययुताः क्रमात् ॥ ९

कामो भस्मशरीरश्च तथानङ्गश्च मन्मथः ।
वसन्तसखनामा च स्मर इक्षुधनुर्धरः ॥ १०

पुष्पबाणश्च ताराद्या ङेहृदन्ताः प्रकीर्तिताः ।
कर्पूररोचनायुग्मे कस्तूरीं च ततः प्रिये ॥ ११

अगरुं कुङ्कुमं धात्रीफलं चन्दनमेव च ।
सुगन्धिपुष्पनिकरमष्टद्रव्याणि पार्वति ॥ १२

सम्पूज्य दमनं सम्यग् गन्धपुष्पाक्षतादिभिः ।
जपेदनङ्गगायत्रीं यथाशक्त्या प्रसन्नधीः ॥ १३

विद्महे मन्मथायान्ते कामदेवाय धीमहि ।
लिखित्वा च ततो देवि तन्नोऽनङ्गः प्रचोदयात् ॥ १४

नमोऽस्तु पुष्पबाणाय जगदाह्लादकारिणे ।
मन्मथाय जगन्नेत्रे रतिप्रीतिप्रियाय च ॥ १५

अनेन मनुना देवि नमस्कुर्यान्मनोभवम् ।
अथ विज्ञापनं कुर्याद् देव्यै दमनपाणियुक् ॥ १६

आमन्त्रितासि देवेशि सद्यः कालो मया शिवे ।
कर्तव्यं तु यथालाभं पूर्णपर्व तवाज्ञया ॥ १७

विज्ञापनाख्यमन्त्रेण त्रिपुरां परितो नयेत् ।
ततः सम्पूज्य देवेशीं गन्धपुष्पाक्षतादिभिः ॥ १८

नैवेद्यं विधिवद् दत्वा श्रीविद्यां प्रार्थयेत्ततः ।
षोडशार्णे जगन्मातर्वाञ्छितार्थफलप्रदे ॥ १९

हृत्स्थान् पूरय देवेशि कामान् कामेश्वरेश्वरि ।
अनेन प्रार्थयेद्देवि कामान् कामेश्वरेश्वरीम् ॥ २०

वर्मावकुण्ठितं कुर्यादस्त्रेणापि च रक्षितम् ।
ततो जागरणं कुर्यात् वाद्यैर्वा जागरो न हि ॥ २१

अथ प्रातः समुत्थाय कुर्याद्वै नित्यपूजनम् ।
तेनैव महतीं पूज्यां मध्ये सत्पुष्पमिश्रिताम् ॥ २२

मनोहरं च विधिवत् कृत्वा नैवेद्यमुत्तमम् ।
सकर्पूरं च ताम्बूलं दद्यात्सम्प्रार्थयेत्ततः ॥ २३

समस्तचक्रचक्रेशि सर्वविद्याशरीरिणि ।
[1] वेदमातर्ममैतत्तु भवेत्विष्टं ममाज्ञया (?) ॥ २४

ततः स्वगुरुमभ्यर्च्य पुष्पभूषावरादिभिः[2] ।
दत्वा दमनकं तस्मै नमस्कृत्य प्रसाद्य च ॥ २५

जलकेलीं ततः कुर्यात् सार्धं च सखिभिः सुखात् ।
अन्नदानं प्रकुर्वीत रसैः षड्भिः समन्वितम् ॥ २६

एवं यः कुरुते विद्वान् दमनारोपणं क्रमात् ।
तस्य सांवत्सरी पूजा श्रीविद्याधिष्ठिता भवेत् ॥ २७

**॥ इति श्रीदक्षिणामूर्तिसंहितायां दमनारोपणं नैमित्तिकविधानं नाम पञ्चत्रिंशः पटलः ॥**

**॥ साम्बशिवार्पणमस्तु शुभमस्तु ॥**

**॥ श्रीरस्तु ॥**

---

1. "वेदमातर्ममैतत्तु भवत्विष्टं तवाखिलम्" मया आचरितं सकलं=सकलमपि कर्मजातं तव प्रीतिकरं भवतु इति प्रार्थनाप्रकारः ।

2. पुष्पादिभिरभ्यर्च्य किमपि अन्यत् अपेक्षितं यदि व्रियतामिति सम्प्रार्थ्य गुरुणा व्रियमाणं दत्वा तदिष्टार्थपूरणेन च तं सन्तोष्य ... ।

॥ श्रीः ॥



अनुबन्धः —

## ॥ श्रीदक्षिणामूर्तिसंहिताग्रन्थोपक्रमभागः ॥

॥ श्रीगणेशाय नमः ॥

बदर्याश्रममासाद्य नारदो भगवान् ऋषिः ।
अपृच्छदानतो भूत्वा नारायणमनामयम् ॥ १

नारदः —

भगवन् करुणामूर्ते सर्वज्ञ जगतीगुरो ।
वैभवं दक्षिणामूर्तेः मन्त्राणां सविशेषकम् ॥ २

देहि मे साधु शिष्याय स्वरूपपरिशुद्धये ।

श्रीनारायणः —

हैमवत्यै शिवेनोक्तं तया मह्यं समर्पितम् ॥ ३

तत्सर्वं कथयिष्यामि शृणु त्वं ब्रह्मनन्दन ।
अनेन मन्त्रराजेन सर्वार्थाः प्रभवन्ति हि ॥ ४

नाप्राप्यं त्रिषु लोकेषु साधकस्य महामते ।
मन्त्रोद्धारं प्रवक्ष्यामि बोधितं बहुधा मुने ॥ ५

मायां प्रथममादाय वेदादिं तदनन्तरम् ।
नमो वै मुनिशार्दूल चतुर्थ्यां भगवत्पदम् ॥ ६

पञ्चमस्य तृतीयं तु संवर्तं माधवान्वितम् ।
दक्षं पादाग्रमादाय प्रतिष्ठा सहितं च तत् ॥ ७

तन्द्रीं तु वामकर्णाप्तां अग्निर्वै पञ्चमादिना ।
एकादशस्वरारूढं वायव्यमपि चोद्धरेत् ॥ ८

मह्यं पदमथोच्चार्य मेधा चैव द्वितीयया ।
प्रज्ञां प्रयच्छेति ततः सा वैश्वानरवल्लभा ॥ ९

एषा भगवतो विद्या स्मर्तॄणां कामदायिनी ।
पञ्चविंशतिवर्णैश्च भूषिता तत्स्वरूपिणी ॥ १०

मायास्थाने महाविद्या श्रिया कामेन वा युता ।
मणिना वाथ वाचा वा भूषिता यदि भावदा ॥ ११

मेधामात्रेण संयुक्ता चतुष्षष्टिकलाप्तये ।
प्रज्ञामात्रसमायुक्ता ब्रह्मज्ञानप्रदायिनी ॥ १२

विद्यैश्वर्यमहासौधविलासैश्वर्यदायिनी ।
उभाभ्यामपि सम्बन्धात् चिन्तामणिप्रदः क्षितौ ॥ १३

एतस्य मन्त्रराजस्य नहि सिद्धारिशोधनम् ।
ऋषिर्ब्रह्मास्य गायत्री छन्दस्तु समुदीरिता ॥ १४

देवता दक्षिणामूर्तिः अनन्ताऽऽनन्दशेवधिः ।
बीजं प्रणवमित्युक्तं शक्तिर्माया समीरिता ॥ १५

कीलकं वह्निजाया स्यात् इष्टाप्त्यै विनियोगकम् ।
एकेन सप्तभिश्चैव षड्भिश्च तदनन्तरम् ॥ १६

चतुर्भिः पञ्चभिश्चैव द्वाभ्यामप्यङ्गकल्पना ।
करन्यासं च तद्वद्धि कारयेत् मुनिसत्तम ॥ १७

शिरोललाटजिह्वाग्रकर्णहृन्नाभिगुह्यके ।
ऊरुजानु पदद्वन्द्वे न्यसेत् दशपदानि च ॥ १८

प्रणवादिनमोऽन्तैश्च वर्णन्यासं ततः शृणु ।
शिरोललाटकर्णाक्षिनासागण्डेषु दन्तके ॥ १९

जिह्वाचिबुककण्ठेषु हृत्स्तनोदरनाभिषु ।
कट्योश्च गुह्यके चैव न्यसेद् वर्णान् यथाक्रमम् ॥ २०

प्रणवादिनमोऽन्तैश्च न्यसेदात्मधिया बुधः ।
हृदि जत्रुस्तने नाभौ वामादिषु च साधकः ॥ २१

वाग्देवताष्टकन्यासं यथाविधि समाचरेत् ।
जिह्वाग्रेऽष्टदलं पद्मं भावयेत्साधकोत्तमः ॥ २२

दलमध्ये दलाग्रे च विन्यसेदावृतित्रयम् ।
मन्त्रेण पुटितं कुर्यात् मातृकान्यासमादितः ॥ २३

एवं न्यस्ततनुः साक्षात् दक्षिणामूर्तिरेव हि ।
कर्मेन्द्रियाणां पञ्चैव तज्ज्ञानेन्द्रियपञ्चकम् ॥ २४

भूतानां पञ्चकं चैव तथा तन्मात्रपञ्चकम् ।
मनोऽवस्थाभेदरूपचतुष्टयमतःपरम् ॥ २५

प्रणवाद्यक्षरैर्युक्तैश्चतुर्विंशतितत्वकैः ।
तत्तन्नामसमायुक्तैः तत्तत्स्थानेषु वै पुनः ॥ २६

प्रणवादिनमोऽन्तैश्च न्यसेद् हृदि तथाऽऽदिमम् ।
आत्मशब्दसमायुक्तं विन्यसेद्देशिकोत्तमः ॥ २७

एवं न्यस्ततनुः साधु साक्षात् परशिवो भवेत् ॥ २८

**इति श्रीदक्षिणामूर्तिसंहितायां प्रथमः पटलः ॥**

## ॥ द्वितीयः पटलः ॥

**श्रीनारायण उवाच —**

अथ ध्यानं प्रवक्ष्यामि शृणु वैणिकदेशिक ।
यद्ध्यानपठनादेव सिद्धयोऽष्टौ भवन्ति हि ॥ १

शुद्धतोयनिधेर्मध्ये रत्नद्वीपे मनोरमे ।
कदम्बवनिकामध्ये श्रीमद्वटतरोरधः ॥ २

रत्नसिंहासने साधु द्वीपिचर्मसमावृते ।
तत्राष्टदलपद्मस्य कर्णिकायां सुशोभने ॥ ३

आसीनमाद्यं पुरुषं आदिमध्यान्तवर्जितम् ।
शुद्धस्फटिकगोक्षीरशरत्पूर्णेन्दुसप्रभम् ॥ ४

वीरासनमथासीनं लम्बदक्षपदाम्बुजम् ।
ज्ञानमुद्रां पुस्तकं च वराभीतिधरं हरम् ॥ ५

जटामण्डलसंलग्नशीतांशुकलयोन्नतम् ।
पादमूलसमाक्रान्तमहापस्मारवैभवम् ॥ ६

रुद्राक्षमालाऽऽभरणभूषितं भूतिभास्वरम् ।
नागहारलसच्चारुकङ्कणैः कटिसूत्रकैः ॥ ७

विराजमानं पुरुषं व्याघ्रचर्माम्बरावृतम् ।
व्याघ्रचर्मोत्तरीयं च मन्दस्मितमुखाम्बुजम् ॥ ८

सिद्धवृन्दैर्योगिवृन्दैर्मुनिवृन्दैर्निषेवितम् ।
चिन्तामणिमहारत्नैः कल्पकैः कामधेनुभिः ॥ ९

चतुर्दशमहाविद्यामूर्तिभिः श्रुतिमस्तकैः ।
आराध्यमानममृतं अग्नीन्दुरविलोचनम् ॥ १०

पूरयन्तं कृपादृष्ट्या पुमर्थान् आश्रिते जने ।
एवं विभावयेदीशं सर्वविद्याकलानिधिम् ॥ ११

कलधौतशैलमध्ये बटनिकटोद्दाममणिपीठे ।
धवलतरवपुषमीशं वरदाभयधारिणं भजे शम्भुम् ॥ १२

विद्यापुस्तकमक्षसूत्रवलयं वातायुपोताभये
सम्यक्सज्जयतं शरच्छशिनिभं न्यग्रोधमूलोदितम् ।
भावे भासुरशीतधामजटिलं श्रीवल्लभाराधितं
आद्यैर्योगिभिरावृतं मुनिवरैः आराधयेच्छङ्करम् ॥ १३

विपश्चिकां करयुगलाद्विनोदिनं
मृगं पुनः परशुवहं भुजद्वये ।
दयानिधिं वटतरुमूलवासिनं
भयापहं हृदि कलये कलानिधिम् ॥ १४

कनककलितमञ्चे कामिनीमङ्कलग्नां
करधृतशुकवीणां लीलया लालयन्तम् ।
अनुपममणिभूषालङ्कृतं चन्द्रमौलिं
दलितविनमदार्तिं दक्षिणामूर्तिमीडे ॥ १५

जानुन्यस्तसुदक्षबाहुविलसच्चिज्ज्ञानमुद्राञ्चितं
वामेनाभयधारिणं विलसितं टङ्कं मृगं धारिणम् ।
कैलासाचलसुन्दरं वटतरोर्मूले महामण्टपे
ध्येयं योगिभिरावृतं परशिवं विद्याप्तये भावये ॥ १६

जटामकुटधारिणं जयजयेति वाचालकैः
उपास्यमुरुविक्रमैरुपनिषद्गणैरादरात् ।
*वटमूलमणिपीठगं शमदमादिसिध्याश्रयं
वरेण्यमहमाश्रये वरदमादिसिद्धं गुरुम् ॥ १७

स्फटिकाक्षमालामभयं दधतं
तटिदुज्ज्वलं निजजटाभराकुलम् ।
वटमूलसिद्धमुनिवृन्दसेवितं
वरदं भजे तमनिशं भयापहम् ॥ १८

पुराणमृषिमाश्रये पुरहरस्मितं भूषणं[1]
शुचिप्रभमुरुक्रमं कलितचन्द्ररेखं सदा ।
वराभयविनोदिनं मधुरवाग्भिराराधितं
ह्यथर्वणशिखागणैर्वटमहीरुहाधःस्तले ॥ १९

योगपट्टेन संवीतं
जटाधरमहर्निशम् ।
जान्वोर्विलम्बिहस्ताभ्यां [2]
न्यग्रोधान्ते स्मरेद्धरम् ॥ २०

जटाटविसमुल्लसत्सुरनदीस्फुरच्छीकरैः
समाहतनिजाङ्ककं धवलशीतरोचिःप्रभम् ।
वराभयसुशोभनं कलितपट्टयोगासनं
भजामि वरदं शिवं वटमहीरुहामन्तरे [3] ॥ २१

---

* वटद्रुतलपीठगं इति पाठः समञ्जसो भाति । वटमूलेति पाठे छन्दोभङ्गत्वात् ॥

1. पुरहरस्मिताभूषणम् 2. हस्ताब्जम् 3. वरमहीरुहाधस्तले इति पाठे सामञ्जस्यमस्तीति भाति ॥

सप्तकोटिमहामन्त्रमौक्तिकाभिरलङ्कृते ।
चतुष्षष्टिकलाकारशारिकाभिरलङ्कृते ॥ २२

अक्षये वटराजेऽस्मिन् आलोकनकुतूहलम् ।
तन्मूलमणिपीठस्थं वरदं चन्द्रशेखरम् ॥ २३

आलिङ्गितं स्ववामाङ्कस्थितया[1] धरकन्यया ।
ध्यायेदेवं जगन्नाथमन्तरङ्गेऽतिनिर्मले ॥ २४

इति श्रीदक्षिणामूर्तिसंहितायां द्वितीयः पटलः ॥



1. भूधरकन्यया ।

## ॥ तृतीयः पटलः ॥

**श्रीनारायण उवाच —**

पुरश्चर्याविधिं वक्ष्ये शृणु वैदिकशेखर ।
गुरुरूपधरात् शम्भोः लब्ध्वा मन्त्रमनुत्तमम् ॥ १

शरीरमर्थं प्राणांश्च निवेद्य शुभलग्नके ।
गुरोरनुज्ञामादाय पुरश्चरणमाचरेत् ॥ २

शिवालये नदीतीरे पर्वते सिन्धुरोधसि ।
बिल्वमूले वटारण्ये पलाशाश्वत्थमूलके ॥ ३

स्वगृहे वा शुभारण्ये यत्र वा रमते मनः ।
निम्नोन्नतपरित्यक्ते विविक्ते परिशोभिते ॥ ४

यथोक्तमासनं कृत्वा विघ्नोत्सारणपूर्वकम् ।
पद्मं वा स्वस्तिकं वापि गोमुखासनमेव वा ॥ ५

बध्वा पद्मासनं वापि कपालासनमेव वा ।
योगमुद्रासनं वापि समास्थाय विचक्षणः ॥ ६

गुरुं गणपतिं चैव दुर्गां चैव समर्चयेत् ।
पूरके तु द्विवारं च कुम्भके पञ्चवारकम् ॥ ७

रेचके तु त्रिवारेण मूलमावर्तयन् बुधः ।
प्राणायामं विधायेत्थं कृत्वा न्यासादिकं क्रमात् ॥ ८

आद्यं पुरुषमीशानं ध्यायन् वटतरोरधः ।
हृदयाम्भोजकुहरे निर्मले स्फटिकप्रभे ॥ ९

मन्त्रार्थचिन्तनं कुर्वन् अक्षवृत्तीर्निगृह्य च ।
जपशत्रून् परित्यज्य गुरुभक्तिपरायणः ॥ १०

पञ्चलक्षं चैकलक्षं दक्षिणामूर्तिमन्त्रकम् ।
गुरूक्तमात्रमथवा जपेत् दृढं अनन्यधीः ॥ ११

दशैकांशं तर्पयेच्च तर्पणं क्रमवद् बुधः ।
तद्दशांशं तु जुहुयात् परमान्नेन साधकः ॥ १२

प्रोक्षणं तद्दशांशेन मार्जनं तद्दशांशतः ।
ब्राह्मणाराधनं कुर्यात् वित्तशाठ्यविवर्जितः ॥ १३

त्रिकालं देवमीशानं तस्मिन् काले समर्चयेत् ।
ततः प्रयोगान् सुबहून् कुर्याद्वै गुर्वनुज्ञया ॥ १४

**इति श्रीदक्षिणामूर्तिसंहितायां तृतीयः पटलः ॥**

## ॥ चतुर्थः पटलः ॥

अथ पूजाविधिं वक्ष्ये पुरुषार्थैकसाधनम् ।
शुचौ मनोरमे देशे वितानाद्यैरलङ्कृते ॥ १

धूपितेऽगरुधूपेन मृगनाभिसुगन्धिले ।
पूजोपकरणं सम्यक् सम्पाद्य च निराकुलः ॥ २

शिवलिङ्गेऽथवा सालग्रामे यन्त्रपटेऽपि वा ।
प्रतिमायां स्थण्डिले वा पूजयेत् देशिकोत्तमम् ॥ ३

पूजयेच्च यथान्यायं षोडशैरुपचारकैः ।
योगिनोऽप्यादिसिद्धांश्च ऋषीन् उपनिषद्गणान् । ४

गन्धर्वाप्सरसश्चैव नदीपर्ववतदेवताः ।
मन्त्रांश्च मूलिकाश्चैव दिव्यौषधिरसायनान् ॥ ५

पूजयेच्चतुरश्रान्ते स्तोत्रेण परितोषयेत् ।
एवं प्रतिदिनं पूजा कार्या भक्तेन नारद ॥ ६

पूजायन्त्रं प्रवक्ष्यामि महेशस्य महामुने ।
बिन्दुत्रिकोणाष्टदलचतुरश्रत्रिरेखकम् ॥ ७

बिन्दौ मायां समालिख्य त्रिकोणे बालिकामनुम् ।
दलाष्टके मनोर्वर्णान् अत्रशिष्टान् त्रिशःक्रमात् ॥ ८

भूपुरे दिक्पतीन् लिख्य तस्मिन्नेवं[नं] प्रपूजयेत् ।
एतद्यन्त्रपरिज्ञानमात्रेण कविराड्भवेत् ॥ ९

इति श्रीदक्षिणामूर्तिसंहितायां चतुर्थः पटलः ॥

## ॥ पञ्चमः पटलः ॥

**श्रीनारायण उवाच —**

वक्ष्ये हवनकर्मापि मन्त्रसिद्धिप्रदं नृणाम् ।
अरत्निमात्रविस्तारं प्रादेशोन्नतमेव च ॥ १

पद्माकृतिसमं कुर्यात् दलाष्टकविभूषितम् ।
कर्णिकावेदिकामध्ये प्रतिष्ठाप्याग्निमादरात् ॥ २

औपासनमथाघारस्यान्ते चावाह्य शङ्करम् ।
दीपान्तं च समाराध्य प्राणाहुत्यन्तमाचरेत् ॥ ३

यथाविधि च मूलेन चोक्तद्रव्येण होमयेत् ।
ततः स्विष्टकृतं हुत्वा तदन्ते परमेशितुः ॥ ४

उत्तरापोशनं दद्यात् ऐशान्ये बलिपूजनम् ।
तमात्मनि समारोप्य उपरिष्टात्क्रियास्ततः ॥ ५

देवं हृदि समुद्वास्य तं समारोपयेद्बुधः ॥ ६



इति श्रीदक्षिणामूर्तिसंहितायां पञ्चमः पटलः ॥

## ॥ षष्ठः पटलः ॥

नारायण उवाच —

अथाचारविधिं वक्ष्याम्युपासकजनार्थदम् ।
स्नानकाले तु मूलेन त्रिवारं कुम्भमुद्रया ॥ १

अभिषिञ्चेत् शिरः स्वीयं मूलेन किल देशिकः ।
मूलेन प्रोक्षयेत्पञ्चवारं सन्ध्यासु मन्त्रवित् ॥ २

त्रिवारं प्राशयेदम्भः त्रिधा मूलाभिमन्त्रितम् ।
मध्याह्नेऽर्घ्यत्रयं कुर्यात् मूलेनाऽऽदित्यमण्डले ॥ ३

प्राणाहुतिविधानान्ते मूलेनैवाऽऽहुतित्रयम् ।
मृषावर्णीं नैव वदेत् वृथालापान्विवर्जयेत् ॥ ४

न वहेन् भारनिवहं स्त्रीनिन्दां नैव कारयेत् ।
वटपत्रे नैव भुक्तं तिक्तं पर्युषितं तथा ॥ ५

ध्यायन् हृदि सदा देवं वीणाहस्तं च पूजयेत् ।
शिवभक्तान् प्रीणयेच्च नित्यकर्मस्वतन्द्रितः ॥ ६

होमयेद्वैश्वदेवान्ते मूलेनैवाऽऽहुतित्रयम् ।
पञ्चवारं पठन् मूलं स्नानकालेऽघमर्षणम् ॥ ७

ध्यायन् वटतरोर्मूले वसन्तं परमेश्वरम् ।
तत्पादमूलप्रणतिं भावयन् स्वपनं ततः ॥ ८

प्रबोधसमये देवं भावयन् कीर्तयन् सुधीः ॥ ९

इति श्रीदक्षिणामूर्तिसंहितायां षष्ठः पटलः ॥

## ॥ सप्तमः पटलः ॥

**श्रीनारायण उवाच —**

अथ प्रयोगान् वक्ष्यामि श्रृणुष्वावहितो भव ।
उत्थायापररात्रे तु त्रिशतं तु त्रिवर्षकम् ॥ १

ध्यायन् जपेन्महादेवं दीर्घायुश्च कविर्भवेत् ।
चैत्रमासं समारभ्य पूर्णिमायां उपोषितः ॥ २

उद्यन्तं शीतकिरणं आलोकयान्तः स्मरन् शिवम् ।
यावदस्तं चन्द्रमसः जपं कुर्यादतन्द्रितः ॥ ३

एवं द्वादशपूर्णासु निवृत्तासु विशेषतः ।
स एव भगवान् शम्भुः प्रत्यक्षं सिद्धरूपधृक् ॥ ४

ददाति सकलान् कामान् योगसिद्धः कविर्भवेत् ।
प्रतिपच्चन्द्रमारभ्य पूर्णिमान्तं तु साधकः ॥ ५

यावदस्तं चन्द्रमसः जपंस्तावदतन्द्रितः ।
पूर्णिमायां महादेवी यक्षिणी परमाङ्गना ॥ ६

मूलिकामन्त्रसिद्धीश्च दिव्यौषधरसायनान् ।
ददाति परमप्रीता दासीवदमितौजसे ॥ ७

अनालोकितशास्त्राणामपि विद्यां ददाति च ।
जप्त्वा लक्षं अथो होमं सहस्रं कुरुते यदि ॥ ८

बृहस्पतिसमो बुध्या जडोऽपि सुकविर्भवेत् ।
अभिमन्त्र्य जलं नित्यमष्टोत्तरशतं बुधः ॥ ९

बालानां मासमात्रं तु दद्यान्मेधाभिवृद्धये ।
मूलं पञ्चशतावृत्त्या तत्सारस्वतमूलिकाम् ॥ १०

भक्षयन् मुष्टिमात्रं तु षण्मासात्तु कविर्भवेत् ।
अमायां सूर्यबिम्बे तु आसायमुदयादितः ॥ ११

मासद्वादशकं कुर्यात् (जप्यात्) तस्य हृत्पद्मगो विभुः ।
व्याकरोति स्वयं वेदशास्त्रार्थानिखिलानपि ॥ १२

सूर्योदये सूर्यबिम्बे ध्यात्वा शम्भुमुमापतिम् ।
सहस्रं प्रजपेन्नित्यं वटमूलनिवासिनम् ॥ १३

त्रिमासात्सकलैश्वर्यभाजनं भवति ध्रुवम् ।
चन्द्रबिम्बे शिवं ध्यात्वा वटमूलालयं विभुम् ॥ १४

पूर्णिमायां द्वादशसु मासेषु च सहस्रकम् ।
तद्दृष्टिगोचराः सर्वे ह्यारोग्यैश्वर्यशोभिताः ॥ १५

शिवलिङ्गे बिल्वपत्रैः सहस्रं प्रतिवासरम् ।
षण्मासमर्चयेत् तस्य मेधाऽसाधारणा भवेत् ॥ १६

मध्यन्दिने बिल्वमूले जपेत्तिष्ठन् सहस्रकम् ।
वटमूलस्थितं देवं विभाव्य हृदयाम्बुजे ॥ १७

मण्डलद्वितयं नित्यं हविष्याशी जितेन्द्रियः ।
अलक्ष्मीमात्मवंशस्थां जडतामपि मूकताम् ॥ १८

नाशयत्येव नियतं धनवान् कविराड् भवेत् ।
जानुदघ्ने जले तिष्ठन् आदित्यमवलोकयन् ॥ १९

सहस्रं प्रजेपन्मासं दृष्ट्या विषविनाशनम् ।
समुद्रतीरे षण्मासं प्रत्यहं तु सहस्रकम् ॥ २०

आकर्षणक्षमो नृणां मृगाणां पक्षिणामपि ।
अश्वत्थमूले षण्मासं सहस्रं प्रतिवासरम् ॥ २१

जपिता नात्र सन्देहो वटारण्येश्वराज्ञया ।
क्षुद्रकृत्याभिचाराणां भूतादीनामपि ध्रुवम् ॥ २२

अवलोकनमात्रेण निग्रहानुग्रहक्षमः ।
सायाह्ने दीपमूले तु देवमावाह्य शङ्करम् ॥ २३

पूजयेत्प्रजपंश्चैव सहस्रं प्रतिवासरम् ।
पुत्रं बृहस्पतेस्तुल्यं वन्ध्यापि लभते ध्रुवम् ॥ २४

इति श्रीदक्षिणामूर्तिसंहितायां सप्तमः पटलः ॥

## श्रीदक्षिणामूर्तिसंहितायामुद्धृता रश्मिमालामन्त्राः

अस्य श्रीमेधादक्षिणामूर्तिरश्मिमालामहामन्त्रस्य विश्वामित्राद्या ऋषयः । गायत्र्यादीनि नानाविधानि छन्दांसि । सवित्रादयो देवताः । मन्त्रस्था अचो बीजानि, हलः शक्तयः बिन्दवः कीलकानि । श्रीमेधादक्षिणामूर्तिप्रसादसिद्ध्यर्थे जपे विनियोगः ।

ओं आं ओं अङ्गुष्ठाभ्यां नमः
,, ईं ,, तर्जनीभ्यां नमः
,, ऊं ,, मध्यमाभ्यां नमः
,, ऐं ,, अनामिकाभ्यां नमः
,, औं ,, कनिष्ठिकाभ्यां नमः
,, अः ,, करतलकरपृष्ठाभ्यां नमः

एवं हृदयादिन्यासाः ।

**ध्यानम् —**

असङ्ख्यातमहःपुञ्जपिञ्जरीकृतविग्रहम् ।
रश्मिमालामयं वन्दे सदाशिवमुमापतिम् ॥

**पञ्चपूजाः —**

१ तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि । धियो यो नः प्रचोदयात् ।
२ ओं नमो भगवते दक्षिणामूर्तये मह्यं मेधां प्रज्ञां प्रयच्छ स्वाहा ।
३ ओं ह्रीं श्रीं साम्बसदाशिवाय तुभ्यं स्वाहा ।
४ ओं ह्रीं दक्षिणामूर्तये तुभ्यं वटमूलनिवासिने ।
ध्यानैकनिरताङ्गाय नमो रुद्राय शम्भवे ह्रीं ओं ॥
५ ओं नमो भगवते दक्षिणामूर्तये ह्रुमः सोहं मह्यं मेधां प्रज्ञां प्रयच्छ स्वाहा ॥

६ ओं पाशुपतास्त्राय स्वाहा ।

७ ह्रीं स्फुर स्फुर प्रस्फुर प्रस्फुर घोर घोरतर तनुरूप चट चट प्रचट प्रचट कण कण वम वम बन्धय बन्धय घातय घातय हुं फट् (स्वाहा) ।

८ ओं वं वटुकाय नमः ।



९ चं चण्डाय नमः

१० ओं ऐं क्लां क्लीं क्लूं क्रों ह्रीं ह्रूं सः कुरु कुरु आपदुद्धारणाय अजामिलबन्धनाय स्वर्णाकर्षणभैरवाय मम दारिद्र्यनिर्मूलनकराय लोकेश्वराय सानन्दाय ओं श्रीं महाभैरवाय नमः ।

११ ओं ह्रीं श्रीं उमामहेश्वराभ्यां नमः ।

१२ ओं ह्रीं ओं नमो भगवते रुद्राय ।

१३ ओं ह्रौं ओं ब्लूं नमः पालय मां पालय पालय मृतसञ्जीविनि ओं भूर्भुवः स्वः त्र्यम्बकं यजमहे + मामृतात् भूर्भुवः स्वरोम् ।

१४ ओं ह्रौं ओं ब्लूं भूर्भुवःस्वः त्र्यम्बकं + मामृतात् ।

१५ ओं ह्रौं ब्लूं सः भूर्भुवःस्वरों ओं नमः शिवायै ।

१६ ओं ह्रीं गौरि रुद्रदेवते योगिनि हुं फट् स्वाहा ।

१७ ओं ह्रीं योगिनि योगिनि योगेश्वरि योगभयङ्करि सकलस्थावरजङ्गमस्य मुखहृदयं मम वशं आकर्षयाकर्षय स्वाहा ।

१८ ओं श्रीं ह्रीं श्रीं शिवे शिवावासे प्रसीद प्रसीद ह्रीं श्रीं ह्रीं ओं शिवकामसुन्दर्यै नमः ।

१९ ओं ह्स्रैं ह्स्रौं ह्स्रः क्ष्रां ओं ह्रीं ओं ह्रीं नमःशिवाय नमःशिवाय नमःशिवाय नमःशिवाय नमः ।

२० ओं ह्रीं ह्रीं सौं तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ।

२१ ओं भूर्भुव:स्व: तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि ।
धियो योऽनः प्रचोदयात् ।

२२ ओं नम:शिवाय भूर्भुव:स्व: ।

२३ ऐं क्लीं सौ: तत्सवितुर्वरेण्यं क ए ई ल ह्लीं भर्गोदेवस्य धीमहि
ह स क ह ल ह्लीं धियो यो न: प्रचोदयत् सकल ह्लीं सौ: क्लीं ऐं
ओं आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुव:स्वरों नम:शिवाय ।

२४ आवहन्ती वितन्वाना । कुर्वाणा चीरमात्मन: । वासाँसि
मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह ।
लोमशां पशुभिः सह स्वाहा ।

२५ नमः शिवाय स्वाहा ।

२६ ओं ह्लीं क ए ई ल ह्लीं हसकहलह्लीं सकलह्लीं नम: शिवाय ।

२७ विश्वेश्वर विरूपाक्ष विश्वरूप सदाशिव ।
शरणं भव भूतेश करुणाकर शङ्कर ।।

२८ ओं नमो नीलकण्ठाय ।

२९ रुद्र शम्भो महादेव हर सर्वज्ञ शङ्कर ।
श्रीवामदेव श्रीकण्ठ नीलकण्ठ नमोऽस्तुते ।।

३० मृत्युञ्जयाय रुद्राय नीलकण्ठाय शम्भवे ।
अमृतेशाय शर्वाय महादेवाय ते नमः ।।

३१ भवाय भवरूपाय भीमाय भयहारिणे ।
उग्रायोग्राघनाशाय शर्वाय शशिमौलये ।।

३२ गौरीवल्लभ कामारे कालकूटविषाशन ।
मामुद्धरापदम्भोधेः त्रिपुरघ्नान्तकान्तक ।।

३३ सद्यो जातं प्रपद्यामि + भवोद्भवाय नमः ।

३४ वामदेवाय नमो + मनोन्मनाय नमः ।

३५ अघोरेभ्योऽथ + रुद्ररूपेभ्यः ।

३६ तत्पुरुषाय + रुद्रः प्रचोदयात् ।

३७ ईशानः सर्वविद्यानां + सदाशिवोम् ।

३८ ओं नमो भगवते सदाशिवाय सर्पयज्ञोपवीतिने जटामकुटालङ्कृतगङ्गाचन्द्रधराय, सर्पभूषणाय सकलविद्यां मे झटिति झटिति प्रयच्छ स्वाहा ।

३९ ओं नमो भगवते दक्षिणामूर्तये वीरासनैकनिलयाय ज्ञानमुद्राधराय वटमूलवासिने सर्वभूताधिपतये कपर्दिने महादेवाय । स्वाहा ।

४० ओं नमो भगवते दक्षिणामूर्तये सकलदेवपूजिताय सकलविद्यास्वरूपिणे सकलजगन्मन्त्रस्वरूपिणे सृष्टिस्थितिसंहारकर्ते भस्मोद्धूलितविग्रहाय नागयज्ञोपवीतिने(नाय) नीलग्रीवाय शशाङ्कशेखराय घोरापस्मारस्थितपदाम्बुजाय महाभैरवसेविताय गौरीशोभितवामोरूवराय सनकसनन्दनसनातनसनत्कुमारादिसकलयोगिसेविताय हरिहरब्रह्मादिदेवगणपूजिताय सकलनिगमागमोपनिषत्स्तुतवैभवाय स्वाश्रितभक्तजनाशापरिपूर्तिधृतकङ्कणाय नन्दिभृङ्गिचण्डी(डे)शवीरभद्रप्रमुखमहागणनाथवृताय सच्चिदानन्दरूपाय सर्वलोकैकसाक्षिणे देशिकेन्द्राय पावकलोचनाय सकलगुरवे भूतप्रेतपिशाचराक्षसचोरापस्मारान् दह दह मां त्रायस्व त्रायस्व हुं फट् (स्वाहा) ।

४१ ओं श्रीं खें खां फट् नरगवुङ्हारणाय शरभमालुवपक्षिराजाय हुं फट् स्वाहा ।

४२ तत्पुरुषाय विद्महे विद्यावासाय धीमहि । तन्नो दक्षिणामूर्तिः(देवः) प्रचोदयात् ॥

# ॥ श्रीदक्षिणामूर्तिमालामन्त्रः ॥

ब्रह्मा – गायत्री – श्रीदक्षिणामूर्तिः परमात्मा – ओं बीजम् । स्वाहा शक्तिः । फट् कीलकम् । (इष्टार्थे) विनियोगः ॥

आं ईं ऊं ऐं औं अः इति कराङ्गन्यासाः ॥



ध्यानम् —

व्याख्यारुद्राक्षमाले कलशसुलिखिते बाहुभिर्वामपादं
बिभ्राणो जानुमूर्ध्नां पदतलनिहितापस्मृतिर्द्रुद्रुमाधः ।
सौवर्णे योगपीठे लिपिमयकमले सूपविष्टस्त्रिणेत्रः
क्षीराभश्चन्द्रमौलिर्वितरतु विमलां शुद्धबुद्धिं शिवो नः ।

पञ्चपूजा ॥ सहनाववतु इति शान्तिः ॥

ओं नमो भगवते दक्षिणामूर्तये गुर्वन्तेवासिवत्सलाय गुरवे सूक्ष्मरूपाय सदाशिवाय निर्मलज्ञानप्रदाय षड्गुणपरिपूर्णाय षट्त्रिंशत्तत्वाधिकाय महादेवमहामुनीश्वर महानन्दरूप श्रीशुद्ध-दक्षिणामूर्ते सदाशिव मां अज्ञानान्निवर्तय सुज्ञाने मां प्रवर्तय प्रवर्तय हुं फट् स्वाहा ।

ओं ऐं ह्रीं सौः ओं नमो भगवते मेधादक्षिणामूर्तये विद्या-मेधाप्रज्ञाप्रदायिने पुस्तकरुद्राक्षमालाधारिणे सकलसाम्राज्यप्रदायिने परमसदागुरुमूर्तये मम चतुःषष्टिकलाविद्याः प्रापय प्रापय ब्रह्म-राक्षसगणानुच्चाटयोच्चाटय मेधां प्रज्ञां दापय दापय ओं ऐं ह्रीं सौः हुं फट् स्वाहा ।

ओं श्रीं ऐं ह्रीं श्रीं ओं नमो भगवते लक्ष्मीदक्षिणामूर्तये श्रां शमितासुरवृन्दाय श्रीं श्रीमत्त्रिपुरसुन्दरीपरिषेवितपादारविन्दयुगलाय श्रूं शमितशत्रुजनवृन्दाय धनुर्बाणहस्ताय खड्गधराय परशुहस्ताय श्रैं श्रेष्ठजनसंस्तुतगुणवृन्दाय सुरूपाय सुरवन्दिताय श्रौं श्रौतस्मार्तादिसकलकर्मप्रवर्तकाय कर्मफलप्रदाय श्रः शरीररक्षकाय भक्तशत्रुविनाशकाय दिव्यमङ्गलविग्रहाय ह्रीं ह्रीं इति परिषेविताय अष्टैश्वर्यसंस्तुताय लक्ष्मीप्रदाय ललितामनोरञ्जनाय श्रीलक्ष्मीदक्षिणामूर्तये तुभ्यं सदाशिव मम सकलैश्वर्यं देहि देहि दापय दापय दारिद्र्यपीडितं मां आप्यायय आप्यायय । ओं श्रीं ऐं ह्रीं श्रीं ओं हुं फट् स्वाहा ॥

ओं ह्रां ओं ह्रीं ओं ह्रूं ओं ह्रैं ओं ह्रौं ओं ह्रः ओं नमो भगवते लकुटदक्षिणामूर्तये विबुधवन्दितविग्रहाय शुकाद्यनेकमुनिपरिवृताय नीलकण्ठाय कुठारपाणये त्रिणेत्राय दैत्यकुलनाशकाय सुजनरक्षकाय द्विजवरसेविताय फणिभूषणाय निगमसंबाधिताहर्मुखाय निरुपमाय निर्गुणाय निजभक्तरक्षकाय निखिलसुखैकनिदानभूताय सुन्दराय ज्ञानप्रदाय कमलासनपरिषेविताय रत्नकिरीटाय विषधरकुण्डलाय द्विजराजकलावतंसाय फणिहाराय भुजगविराजितकङ्कणाय निगमविराजितमञ्जीरकाय सकलैश्वर्यप्रदाय श्रीलकुटदक्षिणामूर्तये तुभ्यं (नमो) मम सकलैश्वर्यं देहि देहि दापय दापय निरवच्छिन्नसुखं देहि देहि दापय दापय दरिद्र्यामयतप्तं मां उज्जीवयोज्जीवय संसारार्णवतप्तं (मग्नं) मामुद्धरोद्धर ओं ह्रां ओं ह्रीं ओं ह्रूं ओं ह्रैं ओं ह्रौं ओं ह्रः हुं फट् स्वाहा ।